अनिरुद्ध-वृत्ति-समेतम्

# साङ्ख्यसूत्रम्

( पाठभेद-सूत्रानुक्रमणी-युतम् )


सम्पादकः

कापिलमठाचार्यलब्धसांख्ययोगविद्यः

डा० रामशंकर भट्टाचार्यः

व्याकरणाचार्यः, एम० ए०, पी एच० डी०



प्रकाशकः

प्राच्यभारतीप्रकाशनम्

कमच्छा, वाराणसी–१

प्रथमावृत्तिः ] १९६४ [ मूल्यम् ५ रु० 5

# निवेदन

आदिविद्वत्पदाख्याय सिद्धाय परमर्षये ।
धर्ममेघप्रतिष्ठाय कपिलाय नमो नमः ॥

सांख्यसूत्र के चार व्याख्याग्रन्थ उपलब्ध होते हैं—अनिरुद्धकृत वृत्ति, महादेववेदान्तिकृत सांख्यवृत्तिसार, विज्ञानभिक्षुकृत सांख्य-प्रवचनभाष्य एवं नागेशभट्टकृत लघुसांख्यसारवृत्ति। अनिरुद्ध की वृत्ति इनमें प्राचीनतम है । इस प्राचीनता के कारण इस वृत्ति की एक मर्यादित स्थान है। इस व्याख्या की महत्ता इस बात से भी जानी जा सकती है कि महादेव ने अपनी व्याख्या पूर्णतः इस वृत्ति के आधार पर ही लिखी है। भाष्यकार विज्ञानभिक्षु इस वृत्ति से भली-भांति परिचित थे, उन्होंने कई स्थलों पर वृत्तिकार के मतों के खण्डन के लिये प्रबल प्रयास किया है, यद्यपि उन्होंने वृत्तिकार का नाम शब्दतः कहीं भी नहीं लिया।

अनिरुद्ध की वृत्ति सूत्रवत् स्वल्पाक्षर है और मुख्यतया सूत्रार्थमात्र ही इस वृत्ति में मिलता है। शंकानिरास आदि पर वृत्तिकार ने कहीं-कहीं स्वल्प चेष्टा की है। दो एक स्थलों में विचार की विस्तृति लक्ष-णीय है।

चिरकाल से ही इस वृत्ति का पाठ कहीं कही अस्तव्यस्त रहा है। बंगाल के सुप्रसिद्ध दार्शनिक विद्वान् कालीवर वेदान्तवागीश जी ने इस वृत्ति के पाठों की अस्तव्यस्तता को अपने सांख्यसूत्र के संस्करण

में स्पष्टतया कहा है। इस वृत्ति के पाठ को व्यवस्थित करने के लिये उन्होंने चेष्टा भी की है। इस कार्य में स्तुत्य परिश्रम रिचार्ड गार्बे नामक जर्मन विद्वान् का है, जिनका अनिरुद्धवृत्तिसंस्करण ( अंग्रेजी अनुवाद, भूमिका आदि के साथ) हमारा सर्वोत्तम अवलम्बन रहा है। गार्बेमहोदय सांख्यशास्त्र में कृतपरिश्रम थे। गार्बेकृत संस्करण में जहाँ भी अशुद्धियां प्रतीत हुई हैं, उन सबों का परिहार इस संस्करण में किया गया है और पादटिप्पणी में हमारी दृष्टि की युक्तता का विवेचन भी कर दिया गया है ( विशेष स्थलों पर )। यह कहना अनुचित न होगा कि वर्त्तमान संस्करण अनिरुद्धवृत्ति का शुद्धपाठबहुल संस्करण है।

इस संस्करण का एक वैशिष्ट्य यह भी है कि अनिरुद्ध द्वारा उद्धृत जिन वचनों के आकरस्थलों का निर्देश गार्बे के संस्करण में नहीं दिया गया था, उनका निर्देश भी हमने कर दिया है। कुछ वचन अभी भी अदृष्टाकर हैं। उद्धृत श्लोकों के आकरस्थलों को न जानने के कारण वचनों के पाठ में कहीं-कहीं विपर्यास हो गए थे ( १।५६ सूत्र की पादटिप्पणी में इसका एक उदाहरण द्रष्टव्य है )। यह संस्करण इस दोष से प्रायेण मुक्त है, यह जानना चाहिए।

अनिरुद्ध बहुत प्राचीन आचार्य नहीं हैं। इनका समय पञ्चदश शताब्दी है, ऐसा रिचार्डगार्बे ने कहा है। विद्वद्वर्य उदयवीर शास्त्री ने गार्बे का मत खण्डन कर पुष्ट प्रमाणों से विस्तार के साथ दिखाया है कि अनिरुद्ध का काल खीष्टीय एकादश शतक के मध्यभाग के लगभग होना चाहिए ( सांख्य दर्शन का इतिहास पृ० ३०९; पृ० ३१२ भी द्रष्टव्य )।

अनिरुद्धवृत्ति के विषय में दो आवश्यक बातें विचार्य हैं - (१) अनिरुद्ध-व्याख्यात सूत्रों का पाठ एवं (२) विज्ञानभिक्षु और अनिरुद्ध के व्याख्यान में पार्थक्य और भेद। ऐसा प्रतीत होता है कि अनिरुद्ध के प्रति भिक्षु श्रद्धापूर्ण दृष्टि नहीं रखते थे। इसका हेतु भी चिन्तनीय है। अनेक गूढार्थक सांख्यसूत्रों (जैसे चिदवसानो भोगः १।१०४) एवं अध्यवसाय (२।१३ सूत्र) आदि पारिभाषिक शब्दों की वृत्तिकार-संमत व्याख्या कहाँ तक समीचीन है, इस पर भी विचार करना आवश्यक है। चूँकि यह संस्करण छात्रोपयोगी है, इसलिये इन विषयों पर यहाँ विचार नहीं किया जा रहा है। हमारे द्वारा संपाद्यमान विज्ञानभिक्षुकृत-भाष्य की भूमिका में इन विषयों पर पुष्कल विचार किया जाएगा।

वाराणसेय संस्कृत विश्वविद्यालय<br>१९ जून, १९६४<br>गङ्गादशहरा

**रामशंकर भट्टाचार्य**<br>अनुसन्धानसहायक

# सांख्यसूत्रसूची

## ( वर्णक्रमानुसारिणी )

ॐ नमः परमर्षये

# साङ्ख्यसूत्रम्

## ( अनिरुद्धकृतवृत्तिसमेतम् )

### प्रथमः विषयाध्यायः

विनायकं नमस्कृत्य विष्णुं सूर्यं सरस्वतीम् ।
लक्ष्मीं गङ्गां महेशानं वृत्तिं कर्त्तुं समारभे ॥[1]

पुरुषः खलु वैराग्यान्मोक्षशास्त्रे प्रवर्त्तते। वैराग्यञ्च द्वेधा स्यात्—भोगादिद्वारेण प्रवृत्तिपरिक्षयात्, जन्मान्तरीय-दुरितक्षयाद्वा[2]। तथा च श्रुतिः—"यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति (जाबाल ४)। शास्त्रे प्रवृत्तश्च परवैराग्यान्मुच्यते। तथा चाह पतञ्जलिः—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्", "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" (१।१५-१६) इति। एतदेव परं वैराग्यं वक्तुमतिकारुणिको महामुनिर्जगदुद्दिधीर्षुः कपिलो मोक्षशास्त्रमारभमाणः प्रथमं सूत्रं चकार—

---

१. ॐ नमो व्यक्तनिदानायेत्यपि क्वचिद् मङ्गलवाक्यं पठ्यते।

२. 'वैराग्यं च द्वेधा स्यात् शोकादिना जन्मान्तरीयदुरितक्षयाद्वा' इति वा पाठः।

संसिद्धौ को विद्वान् यत्नमाचरेत् ॥" तथाहि—शारीरदुःख-निवृत्तये औषधादयः सन्ति, मानसदुःखनिवृत्तये प्रवरस्त्री-मिष्टान्नादयः सन्ति; आधिभौतिकदुःखनिवृत्तये च नीतिशास्त्रार्थ-वादिभिः प्रोक्ता नाना प्रकाराः सन्ति, आधिदैविकदुःखनिवृत्तये च शान्तिमणिमन्त्रादयः सन्ति, इत्यत्रोत्तरसूत्रम्—

**न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ॥२॥**

न वयं निवृत्तिमात्रं पुरुषार्थ इति ब्रूमः, किन्तूत्पत्तिनिवृत्तिः। औषधादिना च नावश्यं दुःखं निवर्त्तते, यदि वा कथञ्चित् निवर्त्तेत, पुनरन्येन न भवितव्यमिति नास्ति नियमः ॥२॥

भवतु दुःखनिवृत्तिस्तथापि न पुरुषार्थः, पुनः पुनस्तथाविध-प्रतीकारकरणात्, इत्यत आह—

**प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥३॥**

यथा प्रत्यहं क्षुत्प्रतीकाराय वरान्नभक्षणादिना तृप्तस्य पुरुषार्थता, तथा दुःखनिवृत्तये औषधादिना पुनः पुनः प्रतीकारात् पुरुषार्थतेति ॥३॥

सिद्धान्तमाह—

**सर्वासम्भवात् सम्भवेऽप्यत्यन्तासम्भवाद्[1] हेयः प्रमाणकुशलैः ॥४॥**

न हि सर्वदेशे सर्वकाले वा वैद्यादयः सम्भवन्ति, सम्भवेऽपि नात्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। अवश्यं हि देहनिबन्धनाद्

---

१. सत्तासंभवाद् हेयः ( पाठा० )। सर्वत्रासंभवादित्यपि दृश्यते। सर्वान्तासंभवादिति पाठस्तु हेयः। भिक्षुस्तु सत्त्वासंभवादित्याह।

रागादीनां सम्भवः, देहो सुखीति न दृष्टमिति। तस्मादेष पुरुषार्थः प्रमाणिकैर्हेयः शास्त्रगम्यश्चोपादेयः ॥४॥

युक्त्यन्तरमाह—

**उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥५॥**

अथ वा दुःखत्रयनिवृत्तेरन्योऽन्यमुत्कर्षो दृष्टः, मोक्षस्तु[1] सर्वोत्कृष्टः, नित्यत्वादेकत्वात् सर्वदुःखोच्छेदरूपत्वाच्च ॥५॥

ननु नास्त्येव तद्दर्शनम् यत्र मोक्षो न पुरुषार्थः, न चौषधादिना दुःखनिवृत्तिमात्रं मोक्षः। तस्माद् यस्तव सिद्धान्तः सोऽस्माकं भविष्यति, इत्यत आह—

**अविशेषश्चोभयोः ॥६॥**

स्वपक्षसिद्ध्या परपक्ष उपालभ्यते, न त्वन्यथा। उक्तञ्च—

"यत्रोभयोः समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोज्यः स्यात्तादृगर्थविचारणे" ॥६॥

किं स्वभावतो बद्धस्य मोक्षसाधनोपदेशः, अन्यथा वेत्यत्राह—

**न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥७॥**

स्वभावनाशात् स्वरूपनाशप्रसङ्गात्। उक्तञ्च—

'वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता।
विकल्पघटितावेतावुभावपि न किञ्चन" ॥७॥

एतदेव द्रढयति—

**स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥८॥**

---

१. मोक्षश्च ( पाठा० )।

नित्यस्वभावस्य बन्धस्य अप्रच्यवात्तन्नाशार्थमनुष्ठानमशक्यमिति ॥८॥

कश्चिद्विप्रलम्भायाऽशक्यमप्युपदिशति, यथाऽङ्गुल्यग्रे करियूथशतमिति । अत्राह—

**नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः[1] ॥९॥**

अशक्यकार्य्याय उपदेशो न सम्भवति, उपदिष्टेऽपि नोपदेशः, निष्फलीभवतीत्यर्थः ॥९॥

अत्र शङ्कते—

**शुक्लपटवद् बीजवच्चेत् ॥१०॥**

स्वभावस्यापि नाशो दृश्यते, यथा पटे शुक्लत्वस्य रागादिभिः, बीजस्य वा अग्न्युत्तापाद् अङ्कुरजननशक्तेः[2] ॥१०॥

सिद्धान्तमाह—

**शक्त्युद्भवानुद्भवाभ्यां[3] नाशक्योपदेशः ॥११॥**

सत्कार्य्यसिद्धेर्न पटस्य शौक्ल्यं नष्टम्, किन्तु रागादिनाभिभूतम्, क्षालनात् पुनरुद्भूतम्; अङ्कुराजननादपि[4] न बीजं नष्टम्, किन्त्वभिभूतम्, तस्य च पुनरुद्भवो न दृश्यते, वस्तुवैचित्र्यात्; अथवा[5] योगिसङ्कल्पादिभिस्तच्छक्त्याविर्भावात् ॥११॥

---

१. उपदेशोप्यनुपदेशः ( पाठा० ) । गार्वेसम्पादिते संस्करणे वृत्तिपाठो नास्ति ।

२. बीजस्य चाङ्कुरजननात् ( पाठा० ) ।

३. अभिभवाभ्याम् ( पाठा० ) ।

४. अङ्कुरजननादिति गार्वेसम्मतपाठोऽशुद्धः ।

५. वाक्यमिदं गार्वेसंस्करणे न दृश्यते ।

ननु आत्मा स्वभावतो न बद्धः, किन्तु कालवशाद् बद्धो भविष्यतीत्यत्राह—

**न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥१२॥**

भवत्वयम्, यदि तस्य कदापि कालयोगः स्यात्, न स्याद्वा; नित्यस्य व्यापिनः सर्वकालसम्बन्धोपाधित्वात्। नित्यस्येत्यनेन सर्वकालसम्बन्धे प्राप्ते[1] व्यापिन इत्युत्तरसूत्रपर्य्यालोचनया सम्पातायातम् ॥१२॥

देशवशाद्बद्धो भविष्यतीत्यत्राह—

**न देशयोगतोऽप्यस्मात् ॥१३॥**

व्यापिनो नित्यस्य सर्वदेशसम्बन्धादिति ॥१३॥

अथावस्थातो बद्धो भविष्यतीत्यत आह—

**नावस्थातो देहधर्मत्वात् तस्याः ॥१४॥**

तस्या अवस्थायाः; देहधर्मत्वादित्युपलक्षणम्, अपरिणामित्वादिति परमार्थः ॥१४॥

आत्मनोऽप्यवस्था भविष्यतीत्यत्राह—

**असङ्गोऽयं पुरुष इति ॥१५॥**

असङ्गो ह्ययं पुरुष इति श्रुतिरस्ति ( बृहदा० ४।३।१६ ), सा बाधिता स्यात् ॥१५॥

कर्मवशाद् बद्धो भविष्यतीत्येतद् दूषयति—

**न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च ॥१६॥**

---

१. नित्यस्येति सर्वकालसम्बन्धे प्राप्ते ( पाठा० )।

निर्गुणत्वादात्मनः, कर्मणो नात्मधर्मत्वम्। नन्वन्यधर्मेणापि कर्मणा बद्धो भविष्यतीति[1], तदयुक्तम्; न ह्यन्यधर्मेणान्यत्र किञ्चिदाधीयते; विश्वस्य वैचित्र्यानुपपत्तेः, अतिप्रसक्तेश्चेति। मुक्तानामपि पुनर्बन्धप्रसङ्गः, अन्यत्वाविशेषादिति ॥१६॥

दूषणान्तरमाह—

**विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥१७॥**

दृश्यन्ते केचित् सुखिनः केचित् दुःखिनः। न चानादौ संसारे केनापि सुखहेतु कर्म दुःखहेतु कर्म वा न कृतम्; अन्य-धर्मेणान्यत्र कार्य्यजनने सर्वे दुःखिनो वा स्युः ॥१७॥

अन्यधर्मेणान्यत्र कार्यजनने प्रकृतिरेव नियामिका भविष्यति, यं पुरुषं प्रति सा प्रवर्त्तते तस्य बन्धो भविष्यती-त्यत्राह—

**प्रकृतिनिबन्धना[2] चेन्न तस्या अपि पारतन्त्र्यम् ॥१८॥**

प्रकृतेरपि व्यापित्वात् सर्वपुरुषसम्बन्धाविशेषात् कर्म विना न नियम इति तस्या अपि कर्मपारतन्त्र्यम्, तत्र चोक्तो दोषः ॥१८॥

यदि हि प्रकृत्यादिनिबन्धन आत्मनो बन्धो नास्ति, स्वभावेन च नास्ति, तर्हि मोक्षशास्त्रोपदेशो व्यर्थः स्यादित्यत्र सिद्धान्तमाह—

**न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥१९॥**

शुद्धेति गुणासङ्गी। बुद्धेति स्वच्छः। तद्योगः बन्धयोगः। तद्योगाद् ऋते प्रकृतियोगादृते, अविवेकं विना नात्मनः कदापि

---

१. भविष्यति, न तद् युक्तम् ( पाठा० )।

२. निबन्धनाच्चेदिति भिक्षुरन्ये च।

बन्धः, किन्तु अविवेकाद् बन्ध इत्यभिप्रायः। स च शास्त्रोपदेशान्नामापवदितव्यः[1] ॥१९॥

अथाऽविद्यया तस्य बन्धो[2] भविष्यतीत्याह—

**नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥२०॥**

अविद्या हि विद्याप्रागभावः प्रध्वंसाभावो वा। उभयत्राप्यवस्तु। न चावस्तुना वस्तुन आत्मनः सम्भवति बन्धः। तस्मादविद्यया बन्ध इति व्यपदेशमात्रम्, न तत्त्वम् ॥२०॥

**वस्तुत्वे सिद्धान्तहानिः ॥२१॥**

अस्माकं तावदविद्यायाः सद्रूपत्वे नाशाभावादनिर्मोक्षः। अद्वैतिनान्त्वविद्या न तात्त्विकी। द्वैतवादिनान्त्वनादेर्वस्तुभूतस्य तस्य नाशाभावादुपदेशानर्थक्यम् ॥२१॥

दूषणान्तरमाह—

**विजातीयद्वैतापत्तिश्च ॥२२॥**

यद्यविद्या वस्तुभूतानादिस्तदा नित्यात्मतुल्या[3]। अनात्मत्वे विजातीयद्वैतापत्तिः[4] ॥२२॥

अथान्यपदार्थानामीदृशी गतिः, अविद्या तु वस्तुभूताऽनादिरपि विनंक्ष्यतीत्याह—

**विरुद्धोभयरूपा चेत् ॥२३॥**

अन्योऽन्यविरुद्धरूपा, अनादिरपि नाशात् प्रागभावरूपा ।२३।

---

१. नाम वेदितव्यः ( पाठा० ), नापवेदितव्यः ( पाठा० )।

२. संबन्धः ( पाठा० )।

३. नित्यात्मगुणतुल्या ( पाठा० )।

४. विजातीयद्वैतत्वम्।

उत्तरमाह—

न तादृक्पदार्थाप्रतीतेः ॥२४॥

न कुत्रापि केनापि कदापि तादृक् पदार्थः प्रतीतः ॥२४॥

यद्येवं, तर्हि प्रकृत्यादीनां षट्पदार्थवैधर्म्यात् कुत्र प्रवेश इत्यत्राह—

न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥२५॥

स्पष्टम् ॥२५॥

यद्यनियताः पदार्थाः, कथं पञ्चविंशतितत्त्वमित्यत्राह—

अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा
बालोन्मत्तादिसमत्वम् ॥२६॥

षडेव पदार्था इति न ब्रूमः, न तु युक्तिसिद्धमपि नाङ्गीकुर्म्मः। अन्यथा बालोन्मत्ततुल्यत्वम्। तथा च—

नह्याप्तवादान् नभसो[1] निपतन्ति महासुराः।
युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः॥ (विष्णुपु० ३।१८।२९ ) ॥२६॥

बौद्धपक्षं निरस्यति—

नानादिविषयोपरागनिमित्तो[2]ऽप्यस्य ॥२७॥

अस्य आत्मनः अनादिविषयवासनानिमित्तो बन्धो भविष्यतीति न। अस्माकं तावद्वासनया सहात्मनः सम्बन्धाभावाद् बन्धाभावः। बौद्धनयेऽपि स्थिरस्यात्मनोऽसत्त्वाद्वासनाया अपि तावत्कालं स्थित्यभावात् केन को बद्ध इति ॥२७॥

---

१. मुद्रिते पुराणे 'वादा नभसः' इति पठ्यते।

२. निमित्तको ( भिक्षुः )।

बाह्यवस्तूपरागाद्वासनासन्तानेनात्मसन्तानस्य बन्धो भविष्यतीत्यत्र आह—

न बाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावोऽपि देशभेदात्, स्रुघ्न[1]स्थपाटलिपुत्रस्थयोरिव ॥२८॥

यद्युच्येत रविजलभाजनयोरपि दृष्ट उपरज्योपरञ्जकभावः, तन्न; तत्र रश्मिसम्बन्धादुपरागः, अत्र तु तत्सम्बन्धो नास्ति। वासनाद्वारेण चेत्, न; तावत्कालासत्त्वात् कथं सम्बन्धः ? सन्तानस्य चेत्, यदि सन्तानी व्यतिरिक्तः, सिद्धान्तहानिः। अथाऽव्यतिरिक्तः, तथापि तेन तत्र किञ्चिदाधेयम्। आधानन्त्वशक्यम्, क्षणिकत्वात्। अनाधाने किन्तेनाऽसत्कल्पेनेति ॥२८॥

मा भूद्वासनया आन्तरोपरागः[2], आत्मनो व्यापित्वाद् बाह्यैकदेशेनात्मसम्बन्धादुपरागो भविष्यतीत्यत्राह—

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥२९॥

एकात्मवादिनां सर्वदा लब्धोपरागादनिर्मोक्ष इति नास्ति व्यवस्था। नानात्मवादिनान्तु सर्वेषां सर्वार्थैः सम्बन्धादेकदा तुल्यज्ञानोत्पादान्न व्यवस्था ॥२९॥

शङ्कते—

अदृष्टवशाच्चेत् ॥३०॥

यद्यपि सर्वदा सम्बन्धात् सर्वत्र ज्ञानं प्रसज्येत, तथापि

---

१. क्वचित् श्रुघ्नेति पाठः। स्रुघ्ननामकं स्थानं महाभाष्ये बहुधा स्मृतम्।

२. आन्तरोक्तत्वादुपरागः, आन्तरत्वादुपरागः ( पाठा० )।

यस्यादृष्टेन यज्ज्ञानं जन्यते, तदेव तस्य कारणमिति न सर्वत्र ज्ञानम् ॥३०॥

दूषणमाह—

न द्वयोरेककालायोगादुपकार्य्योपकारकभावः ॥३१॥

[1]द्वयोः कर्त्तृ-भोक्त्रोरेककालायोगाद् एककालिकासत्त्वेन नोपकार्य्योपकारकभावः सम्भवति ॥३१॥

शङ्कते—

पुत्रकर्मवदिति चेत् ॥३२॥

यथा पुत्रेष्टियागादिना अविद्यमानस्य पुत्रस्य संस्कारद्वारा उपकारः क्रियते, तथाऽत्रापि भविष्यति ॥३२॥

अत्र सिद्धान्तमाह—

नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिकर्मणा[2] संस्क्रियते ॥३३॥

स्वमते त्वात्माऽनादिर्नित्यः शुद्धो बुद्धः तदुद्देशेन हविस्त्यागादयो युज्यन्त इति ॥३३॥

आत्मा अस्थिरबोध इत्याह—

स्थिरकार्यासिद्धेः क्षणिकत्वम् ॥३४॥

---

१. अत्र गार्बेसंस्करणे 'व्यक्तम्' इत्येव वृत्तिपाठः। अस्मत्संमतपाठस्तु कोशान्तरे दृश्यते।

२. गर्भाधानादिनेति अन्ये व्याख्याकाराः। यस्य मते त्वात्मेति वृत्तौ पाठान्तरम्।

सत्त्वमर्थक्रियाकारित्वम्, तच्च क्रमाक्रमाभ्यां व्याप्तम्, तौ चाक्षणिके न सम्भवतः, अतस्तौ क्षणिकत्वमापादयतः ॥३४॥

परिहरति—

न प्रत्यभिज्ञाबाधात् ॥३५॥

यद्यपि सहकारिसद्भावासद्भावाभ्यां करणाकरणन्यायैः स्थिरसिद्धिः समाधेया, तथापि सर्वत्राद्यविवादसिद्धत्वात् 'स एवायम्' इत्यबाधितप्रत्यभिज्ञाबाध उक्तः। एतदन्यत्र[1] प्रपञ्चितमिति नेह प्रतन्यते ॥३५॥

दूषणान्तरमाह—

श्रुतिन्यायविरोधाच्च ॥३६॥

श्रुतिराह 'अस्ति जन्मान्तरफलोपभोक्ता पुरुषः'[2]। न्यायश्च 'को नामानुपभोग्ये कर्मणि तत्साधने वा प्रवर्त्तते।' यद्युच्येत[3] कारुणिकानां विरागात् प्रवृत्तिर्दृश्यते, तन्न, तत्रापि तदुपकारेण स्वधर्मलाभात्; धर्मानभिसन्धानेऽपि मोक्षसाधनत्वात् ॥३६॥

दूषणान्तरमाह—

दृष्टान्तासिद्धेश्च ॥३७॥

सर्वस्यैव पक्षप्रवेशान्नास्ति दृष्टान्तः। अप्रवेशे स एव

---

१. अन्यत्रेति पदेन अनिरुद्धकृतोऽन्यो ग्रन्थोऽभिप्रेत उत आचार्यान्तरकृतो ग्रन्थ इति न ज्ञायते।

२. जन्मान्तरोपभोग्यभोक्ता (पाठा०)। नेदं श्रुतिवचनमपि तु श्रुत्यर्थमूलकं वचनम्।

३. यद्युच्येतेति क्वचिन्न पठ्यते।

स्थिरः। अथ तस्यापि क्षणिकत्वमन्यहेतुना प्रसाध्यताम्, तत्रापि दृष्टान्तासिद्धिरिति ॥३७॥

क्षणिकपक्ष एवार्थक्रिया न सम्भवतीत्याह—

युगपज्जायमानयोर्न कार्यकारणभावः ॥३८॥

सव्येतरविषाणयोरिव युगपज्जायमानयोः स्वलक्षणार्थक्रिययोः। एतच्चासकृदुक्तम् ॥३८॥

पूर्वापरकालभावितामात्रात्कार्यकारणभावो भविष्यतीत्यत्राह—

पूर्वापाये उत्तरायोगात्[1] ॥३९॥

भवेदेवम्, यद्यतिशयाधायकत्वं स्यात्; तदेव त्वशक्यं क्षणिकत्वादिति ॥३९॥

एतत् स्पष्टयति—

तद्भावे तदयोगादुभयव्यभिचारादपि न ॥४०॥

हेतुहेतुमद्भावकाले कार्याभावादुभयव्यभिचारादपि न कार्य्यकारणभावः। आस्तां तावदर्थक्रियाकारित्वम्, अयं हेतुरिदं कार्यमिति व्यवहारोऽपि न स्यात् ॥४०॥

अथ हेतोः कार्यकाले सत्त्वमप्रयोजकम्, पूर्वकालभाविता-मात्रेण भविष्यतीत्यत्र आह—

पूर्वभावित्वमात्रे[2] न नियमः ॥४१॥

किं भिन्नसन्तानस्य, एकसन्तानस्य वा ? भिन्नसन्तानस्य

---

१. उत्तरायोगादिति भ्रष्टः पाठः।

२. पूर्वभाविमात्रे (पाठा०)। पूर्वभावमात्रे...इति केचन व्याख्याकाराः।

चेत्, अतिप्रसङ्गः। एकसन्तानस्य चेत्, निरन्वयध्वंसः। तस्य हि भिन्नसन्तानेन तुल्यत्वाद् न नियमः। अन्वयश्च नास्तीत्युक्तम्। अथाविद्यमानस्यापि हेतुता दृश्यते, यथेपुक्षेपकस्य इपुक्षेपानन्तरमपस्मारादिना मरणम्[1], पश्चादिषुविद्धस्य मरणकर्तृत्वम्; तन्न, तत्रापि मरणे व्यापारद्वारेणान्वयात् ॥४१॥

बाह्यवस्तूपरागाद् बन्ध इत्युक्तम्। ननु बाह्यञ्च वस्तु नास्ति, विज्ञानात्मकत्वाज्जगत इति विज्ञानवादिमतं निरस्यति[2]—

## न विज्ञानमात्रं बाह्यप्रतीतेः ॥४२॥

न विज्ञानमात्रं जगत्। तथा सत्यहं घट इति प्रत्ययः स्यात्, न त्वयं घट इति। वासनाविशेषादिति चेत्, न; बाह्याभावे घटवासनाया एव असत्त्वात् कथं विशेषः? किञ्च; वासनाया अपि कारणं वासनैव? उत बाह्यवासनापि? वासनापीतिपक्षेऽन्यस्यापि सत्त्वात् स एव बाह्योऽर्थः। ननु नास्त्येव बाह्योऽर्थः, अवयवातिरिक्तस्य अवयविनोऽभावात्। तथा हि—अवयवावयविनोरेकत्वम्, एकत्वप्रतीतेः। चलत्यवयवेऽवयवी चलति। अल्पावयवे न चलत्यवयवी। 'न चलती' ति विरुद्धधर्माध्यासेन भेदान्नैकत्वम्। एवं रक्तारक्तावृतानावृततद्देशातद्देशत्वादिदोषा उदाहार्याः। मा भूदवयवी, तथापि न बाह्यार्थापलापः, परमाणुपुञ्जस्यैव स्थूलत्वेन ग्रहणात्। न अवयविना हि कार्येण परमाणुरनुमातव्यः। तदभावात् कानुमानम्[3], परमाणूनामतीन्द्रियत्वात् पुञ्जेऽपि किञ्चिदतिशयानाधानात् स्थूलोऽयमिति प्रत्ययो भ्रान्त इति विज्ञानमात्रं जगदिति। अत्रोच्यते—अवयवावयविनो-

१. महिष्यादिमरणम्, महिष्यादिना मरणात् ( पाठा० )।
२. विज्ञानवादिनं निराकरोति ( पाठ० )।
३. तदभावे केनानुमातव्यः ( पाठा० )।

भेदात्। अपि च द्वयोरन्यत्वान्नावयवकम्पेऽवयवी कम्पते। यत्र तु बहुतरावयवकम्पस्तत्रावयवी कम्पत एव। एवं रक्तारक्तादिविरोधेऽपि सिद्धान्ता वक्तव्याः। तस्मात् सिद्धो बाह्योऽर्थः। वासनैवेति पक्षे सर्वदा ज्ञानोत्पत्तिरिति ॥४२॥

निर्विषयस्य ज्ञानस्यादर्शनाद्विषयाभावाज् ज्ञानमपि नास्तीति शून्यवाद्याह—

तदभावे तदभावाच्छून्यं तर्हि ॥४३॥

विषयाभावे ज्ञानाभावाच्छून्यम्; स्वविषयत्वे कर्तृकर्मविरोधः स्याद् इति ॥४३॥

शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ॥४४॥

यदि भावरूपं तत्त्वं स्यात्तदा भावस्य नाशात्तत्त्वनाशेऽनिर्मोक्षः। वस्तुधर्मत्वाद्विनाशस्य वस्तुनोऽवश्यं विनाशात् ॥४४॥

समाधानमाह—

अपवादमात्रमबुद्धानाम् ॥४५॥

भावो नश्यतीति[1] वाङ्मात्रं, नतु तत्त्वम्। अबुद्धानामज्ञातशास्त्राणाम्, प्रागभावस्य विनाशदर्शनात्, सत्कार्यसिद्धौ भावस्याविनाशात्, तिरोभावे नाशशब्दप्रयोगेऽपि प्रकृतिपुरुषयोरनाशात्। नन्वभाव एव नास्ति, कुतस्तस्य नाशानाशचिन्ता ? कथं तर्हि अघटं भूतलमिति ज्ञानम् ? भूतलालम्बनं चेद् घटवत्यपि भूतले तदभावज्ञानप्रसङ्गः; भूतलस्य तादवस्थ्यात्। केवलभूतलालम्बनमभावज्ञानं, तच्च घटे सति कैवल्यं नास्तीति चेत्, किं

१. अभावो न नश्यतीति क्वचित् पाठः।

भूतलस्वरूपमात्रं कैवल्यम्, तदतिरिक्तं वा ? यदि स्वरूपमात्रम्, घटे सत्यपि तस्य सद्भावादभावज्ञानं स्यात्। अतिरिक्तपक्षे स एवाऽभावः। अथ भूतलस्यैकाकित्वेऽभावव्यवहारः, घटे सति एकाकित्वं नास्तीति काऽभावव्यवहारहेतुत्वम्ः[1] ? तन्न; एकाकित्व-मेकत्वसंख्या वा, अन्यद्वा ? एकत्वसंख्या च घटवत्यपि भूतलेऽस्ति। अन्यदिति पक्षे स एवाभावः। विषयावैलक्षण्ये विज्ञानवैलक्षण्याभावात्। ननु भावाभावयोः सम्बन्धाभावात कथमभावज्ञानमिति, यथा घटोऽयमिति इन्द्रियान्वयव्यतिरेकाज् ज्ञानं तथा अभावज्ञानमपि सकारणम्। कार्यदर्शनाद्धि कारणं परिकल्प्यते, न तु दृष्टकार्यापलापः शक्यते कर्त्तुम्[2]। किञ्च, अनियतपदार्थवादित्वादस्माकं यथोपपन्नः सम्बन्धोऽपि कश्चिद्-भविष्यतीतिका नो हानिः। तस्मात् सिद्धोऽभाव इति ॥४५॥

समाधानान्तरमाह—

**उभयपक्षसमानक्षेमादयमपि[3] ॥४६॥**

अयमपि शून्यवादः क्षणिकपक्षविज्ञानपक्षतुल्यक्षेमान्नि-राकार्य्यः। यथा प्रत्यक्षप्रत्यभिज्ञया क्षणिकनिराकरणम्, बाह्यवस्तु-प्रत्यक्षाद्विज्ञाननिराकरणम्, तथाऽयमपि प्रत्यक्षेणैव समस्तविश्व-दर्शनाच्छून्यवादो निराकार्य्यः ॥४६॥

दूषणान्तरमाह—

**अपुरुषार्थत्वमुभयथा ॥४७॥**

यदि हि शून्यमभावः ? को हि स्वस्थात्मा स्वस्य अभावाय

---

१. हेतुत्वम्; व्यवहारित्वम्, व्यवहारकारित्वम् ( पाठा० )।
२. वक्तुम् ( पाठा० )।
३. समानक्षेमत्वात् ( पाठा० )।

यतेत; मोक्षः पुरुषार्थ इति भावशब्दश्चानर्थकः स्यात्। अथ भावाभावव्यतिरिक्तं शून्यम्, न; एवम्भूतस्य वस्तुनोऽदर्शना- दप्यपुरुषार्थत्वम् ॥४७॥

शून्यवादिनं निराकर्तुं देहपरिमाण आत्मेति क्षपणक- मतमाह—

न गतिविशेषात् ॥४८॥

न शून्यं तत्त्वं, शून्यस्य गत्यभावात्। दृश्यते च गतिः। तथा च श्रुतिः[1]—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद् यमः" (वनपर्व २९७।१७), "पापेन नरकं याति", "पुण्येन स्वर्गं याति", "ज्ञानेन ब्रह्मलोकं याति"[2] इति ॥४८॥

एतद् दूषयति—

निष्क्रियस्य तदसम्भवात् ॥४९॥

क्रियाशून्यस्य पुरुषस्य गमनासम्भवात् ॥४९॥

निष्क्रियत्वमेवाह—

मूर्त्तत्वाद् घटादिवत् समानधर्मापत्तावपसिद्धान्तः ॥५०॥

मूर्त्ता घटादयः क्रियावन्तः, तत्तुल्यधर्मत्वे विनाशित्वा- दयमपसिद्धान्तः। किञ्च, जन्मान्तरसञ्चारे हस्तिकृमिदेह- परिमाणत्वात् सङ्कोचविकाशित्वेन सावयवत्वादनित्यत्व- मिति ॥५०॥

एवञ्चाङ्गुष्ठमात्रमित्यादिश्रुतिविरोधः, अत आह—

---

१. अत्र श्रुतिपदं श्रौतपरम्परागतवचनतात्पर्यकम्। यद्वा—स्मृति- पुराणादिषु श्रूयत इति श्रुतिः।

२. पापेनेत्यादिवचनत्रयं श्रुत्यर्थमूलकम्।

गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥५१॥

यथा घटाद्युपाधिभेदाद् घटे गच्छति घटाकाशं गच्छतीति ज्ञानम्, तथा गच्छति शरीरे शरीराद्यवच्छेदादात्मा गच्छतीति-प्रतीतिः ॥५१॥

किमुपाधिना, कर्मवैचित्र्यादेव तद्विशेषो भविष्यतीत्यत आह—

न कर्मणाप्यतद्धर्मत्वात् ॥५२॥

भवेदेवं यदि कर्म आत्मधर्मः स्यात्, न त्वात्मनः कश्चि-द्धर्मोऽस्ति निर्गुणत्वात् ॥५२॥

तद्धर्म एव कर्म भविष्यति, को विरोध इति ? अत आह—

निर्गुणादिश्रुतिविरोधश्चेति[1] ॥५३॥

"असङ्गो ह्ययं पुरुषः" ( बृहदा० ४।३।१६ ) इति श्रुतिर्विरुद्धा स्यात् ॥५३॥

मा भूदात्मधर्मः, अन्यधर्मेणापि क्रियाविशेषो भविष्यति, आत्मनो व्यापित्वेन सर्वसम्बन्धादित्यत आह—

अतिप्रसक्तिरन्यधर्मत्वे ॥५४॥

सर्वसम्बन्धाविशेषान्मुक्तात्मनामपि बन्धप्रसक्तिः ॥५४॥

ननु तवापि धर्माधर्मव्यवस्थास्ति, बद्धस्य हि मुक्त्यर्थं प्रवृत्तिर्दृश्यते। तत्र यस्तव सिद्धान्तः, सोऽस्माकं भविष्यतीति समानमित्यत आह—

तद्योगेऽप्यविवेकान्न समानत्वम् ॥५५॥

---

१. ५३–५४ सूत्रे खलु क्रमपरिवर्त्तनं कृत्वा अन्यैर्व्याख्याकारैः पठ्येते।

धर्माधर्मयोगेऽपि न समानत्वं समानधर्मत्वम्, अविवेकात्। यदि तात्त्विको धर्माधर्मयोग आत्मनः स्यात्, तदा तुल्यत्वम्; किन्तु अविवेकादात्मनो धर्माधर्मयोगाभिमान इति क्व समानत्वम् ॥५५॥

भवत्वविवेकाद् बन्धः। तथाप्यविवेकनाशार्थं धर्मस्वीकरणात् तुल्यत्वम्, अन्यथा सर्वदा बन्धः स्यात्, इत्यत आह—

नियतकारणात्तदुच्छित्तिर्ध्वान्तवत् ॥५६॥

अन्वयव्यतिरेकाभ्यां यस्य यत् कारणमवगतं तद्व्यभिचारे सर्वतोऽनाश्वासः। यथा ध्वान्तनाशाय प्रकाशः, तथात्रापि विवेकादविवेकनाशः। यथा[1] अविवेकनाशार्थं विवेकोऽपेक्ष्यते, विवेकोत्पत्त्यर्थमपि तथात्मनि धर्मस्वीकारोऽस्तु, मैवम्; प्राकृतेन बुद्धिनिष्ठेनापि धर्मेण विवेकोत्पत्तेः। किमिदं ध्वान्तं नाम? अभावस्तम इति केचित्, तन्न, विधिमुखप्रतीतेः। अभावत्वे किमालोकप्रागभावः, प्रध्वंसाभावो वा। यदि प्रागभावः, तर्हि यथा घटे उत्पन्ने घटप्रागभावो नष्टः, तथाऽलोके सत्यालोकप्रागभावो नष्ट इति प्रत्ययः स्यात्। भविष्यदालोकप्रागभावसत्त्वे वर्त्तमानालोके सत्यन्धकारोऽविनष्टः स्यात्। अथ प्रध्वंसाभावः, तथाप्यनश्वरत्वादालोकान्तरे सत्यन्धकारप्रतीतिप्रसङ्गः, यथा घटान्तरे उत्पन्ने नष्टघटप्रध्वंसोऽस्त्येव। अन्योऽन्याभावस्तु वस्तुनोरप्यस्तीति तेन किम्! अत्यन्ताभावस्तु दुष्टत्वान्नाशङ्कनीयः। तदुक्तम् "न च भासामभावस्य तमस्त्वं वृद्धसम्मतम्। छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः॥ दूरासन्नप्रदीपाद्धि महदल्पा चलाऽचला।

---

१. विवेकार्थं धर्मस्वीकारे का क्षतिः, प्राकृतेनापि धर्मेणोपपत्तेः इति क्वचित् पाठः।

देहानुवर्त्तिनी छाया न वस्तुत्वाद् विना भवेत् ।"[1] भावस्तम[2] इति तु व्यपदेशो भावे[3] सति प्रतीयमानत्वादिति। आलोके सति वस्तुग्रहणम्, तदभावे सति कथं ग्रहणमिति वैधर्म्यमात्रम्। यथा कौशिको भानिरपेक्ष एव गृह्णाति, तथाऽऽलोकानपेक्षमेव तमोग्रहणं वैचित्र्यात् पदार्थस्य। तस्माद्रूपविशेषोऽयं यत्रावरकमस्ति तत्रारोप्य गृह्यते। द्रव्यान्तरमिति केचित्। तदुक्तं "तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धधर्म-[4] वैधर्म्यान्नवभ्यो भेत्तुमर्हति ।" अथ भवतु गुणो वा द्रव्यं वा, नास्माकं सिद्धान्तक्षतिः, अनियतपदार्थवादित्वाद्, अभावस्तु न भवतीति ब्रूमः ॥ ५६ ॥

विवेकान्मुक्तिरित्युक्तम्। घटपटादीनां विवेकोऽस्मदादीनामप्यस्तीति सर्वमुक्तिप्रसङ्ग इत्यत्राह—

प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥ ५७ ॥

सर्वेषां मूलं प्रधानम्, तस्याविवेकादन्याविवेकस्य सम्भवः। पदार्थानामन्योऽन्यं भवत्वविवेको विवेको वा, न तेन बन्धमोक्षौ, किन्तु प्रधानविवेकाविवेकाभ्याम्। अतस्तद्धाने प्रधानाविवेकहाने सर्वाविवेकहानम् ॥ ५७ ॥

भवतु विवेकान्मुक्तिः, स किमात्मसम्बन्धी ? न वा ? आत्मसम्बन्धी चेत्, आत्मनः कूटस्थत्वव्याघातः; असम्बन्धी चेत्, अतिप्रसक्तिः, इत्यत आह—

---

१. न्यायकन्दल्यामुद्देशप्रकरणे इदमुद्धृतम्। गार्बे-संस्करणे पुराणेषु गुणश्रुतेरित्येव पाठः, स च असम्यक्।

२. अभावस्तमः '''' इत्यपि पाठः।

३. अभावे सति ( पाठा० )।

४. द्रव्येति पठ्यते क्वचित्।

वाङ्मात्रन्तु न [1]तत्त्वम्, चित्तस्थितेः ॥ ५८ ॥

आत्मसम्बन्धीति वाङ्मात्रम्, न तु तात्त्विकः सम्बन्धः। असम्बन्धेऽपि चित्तस्थितेः—चित्ते विवेकस्थितेः। चित्तसन्निधानादात्मनि विवेकाभिमान इति निवेदयिष्यामः ॥ ५८ ॥

भवतु श्रवणादेव विवेकज्ञानम्, अनेकजन्मायाससाध्येनापरोक्षज्ञानेन किमित्यत आह—

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥ ५९ ॥

व्यक्तम् ॥ ५९ ॥

प्रकृत्यादयः सन्ति, ते च महदादिक्रमेण परिणमन्त इति न दृष्टमित्यत आह—

अचाक्षुषाणामनुमानेन बोधः, धूमादिभिरिव वह्नेः ॥ ६० ॥

भवेदेवम्, यदि प्रत्यक्षमेव प्रमाणं नानुमानादिकमिति। प्रकृत्यादीनामदर्शनेऽपि सामान्यतो दृष्टादनुमानात् सिद्धेः ॥६०॥

प्रकृत्यादीनां सृष्टिक्रममाह—

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः[2] स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ॥ ६१॥

---

१. न तु इत्यपरे व्याख्याकृतः।

२. गार्बेमते सूत्रे 'तन्मात्रेभ्यः' इति पदं नास्ति। भिक्षुनागेशादयस्तु पदमिदं पठन्त्येव। अनिरुद्धवृत्तावपि प्रायेण पदमिदं पठ्यते। अत्र पदमिदमावश्यकम्, यतो हि अस्मिन् सूत्रे व्यक्तपदार्थानां कार्यकारण-परम्परा स्पष्टमुच्यते। यद्यत्र तन्मात्रेभ्य इति पदं न स्यात् तर्हि स्थूलभूतानाम् उपादानं किमिति न ज्ञातं स्यात्। एतत्सूत्रसदृश्यां सांख्यकारिकायामपि 'पञ्चभ्यः पञ्चभूतानि' इति पठ्यते ( २२ का० )।

यद्यपि त्रयाणां साम्यावस्था प्रकृतिः, तथाप्येकैकस्मिन्नपि प्रकृतिशब्दप्रयोगः साङ्केतिकः। महानिति बुद्धितत्त्वम्। अहङ्कार इत्यभिमानः। पञ्च तन्मात्राणीति शब्द-स्पर्श-रूप-रस-गन्धाः। उभयमिन्द्रियं—बाह्यानि पञ्च कर्मेन्द्रियाणि वाक्पाणि-पाद-पायूपस्थाख्यानि, पञ्च च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणनामानि। आन्तरञ्च मनः। स्थूलभूतानि आकाशवायुतेजोजलभूमयः। तेषाञ्च पञ्चतन्मात्रेभ्य उत्पत्तिरिति बोद्धव्यम्। स्थूल इत्युपलक्षणम्, तेन सूक्ष्मभूतानामपि ग्रहणम्। पुरुष इति संख्यापूरणार्थम्, नित्यत्वादात्मनः ॥ ६१ ॥

कार्यात् कारणानुमानं प्रातिलोम्येनाह—

स्थूलात् पञ्चतन्मात्रस्य ॥६२॥

स्थूलात् पञ्चभूतात् कार्यात् सत्त्वरजस्तमोभेदेन शान्त-घोरमूढरूपात् पञ्चतन्मात्रस्य ज्ञानम् ॥६२॥

बाह्याभ्यन्तराभ्यां तैरहङ्कारस्य[1] ॥६३॥

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्यैरह-ङ्कारस्य ज्ञानम् ॥६३॥

तेनान्तःकरणस्य ॥६४॥

तेनाहङ्कारेण कार्येणान्तःकरणस्य बुद्धेर्ज्ञानम् ॥६४॥

ततः प्रकृतेः ॥६५॥

ततो महत्तत्त्वात् कार्यात् प्रकृतेर्मूलकारणस्य प्रधानस्य ज्ञानम् ॥६५॥

---

१. तैश्चाहङ्कारस्येति अन्ये व्याख्यातारः।

संघातपरार्थत्वात्[1] पुरुषस्य[2] ॥६६॥

न प्रकृतेः कार्यत्वेन पुरुषस्य ज्ञानम्, प्रकृतेर्नित्यत्वात् पुरुषस्याकारणत्वात्,किन्तु प्रकृतेः संघातत्वात्; त्रिगुणात्मकत्वात् परार्थत्वम्। परश्च पुरुषः, अतस्तस्य ज्ञानम्। स चासंहतो वक्तव्यः, अनवस्थाभयात् ॥६६॥

अथ किं प्रकृतेरपि कारणं भविष्यतीत्यत्राह—

मूले मूलाभावादमूलं मूलम् ॥६७॥

मूलप्रकृतेर्मूलाभावात् कारणाभावादमूलं यत् कारणं तन्मूलं, सैव प्रकृतिः ॥६७॥

अत्र युक्तिमाह—

पारम्पर्य्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥६८॥

प्रकृतेरन्यत् कारणं तस्याप्यन्यत् कारणमित्यनवस्थादोषादन्ततोऽकारणं मूलं वक्तव्यम्। सैव प्रकृतिरिति। पञ्चविंशतितत्त्वाधिकाङ्गीकारे च गौरवं स्यात् ॥६८॥

प्रकृतेरप्रत्यक्षत्वात् कथं कारणत्वावगम इत्यत्राह—

समानः प्रकृतेर्द्वयोः ॥६९॥

द्वयोः वादिप्रतिवादिनोः समानस्तुल्यत्वम्। यथा परमाणोरप्रत्यक्षत्वेऽपि घटादौ तद्गुणदर्शनात् परमाण्वनुमानम्, तथात्रापि जगत्त्रैगुण्यदर्शनात् कारणं प्रकृतिस्त्रिगुणात्मिकेत्यनुमीयते। तथा हि—एका कामिनी भर्त्तुः सुखदेति सात्त्विकी, अविनयाद् दुःखदेति राजसी, विरहान्मोहदेति तामसी; एवं सर्वे भावा द्रष्टव्याः ॥६९॥

---

१. संहत० (पाठा०)। २. पुरुषार्थस्येति क्वचित्पठ्यते, सोऽपपाठः।

यदि हि विवेकदर्शनान्मुक्तिस्तदा शास्त्रश्रवणादेव मुक्तिः स्यात्, न चैवम्; कस्यापि हि क्षिप्रं कस्यापि च चिरेणेति दर्शनादित्यत आह—

अधिकारित्रैविध्यान्न नियमः ॥७०॥

अधिकारिणस्त्रिविधा भवन्ति—उत्तममध्यमाधमभेदात्। तद्भेदः सहकारिणोऽविद्यादेर्भेदात्। तद्भेदश्चादृष्टभेदात्। ततश्च श्रवणमात्रादिति न नियमः ॥७०॥

पूर्वं प्रकृतेर्महानिति सूत्रे कार्यकारणभावः प्रतिपादितः, न तु क्रम इति भ्रमं निराकरोति—

महदाख्यमाद्यं कार्यं तन्मनः ॥७१॥

यत् प्रकृतेराद्यं कार्यं तन्महत्, महत्तत्त्वं बुद्धिः, तदेव मननान्मन इति ॥७१॥

चरमोऽहङ्कारः ॥७२॥

अनन्तरं बुद्धेः कार्यमहङ्कारः ॥७२॥

तत्कार्यत्वमन्येषाम्[1] ॥७३॥

तत्कार्यत्वम् अहङ्कारकार्यत्वम् अन्येषामेकादशेन्द्रियाणां पञ्चतन्मात्राणाञ्च। पारम्पर्येण तन्मात्रकार्याणामपि भूतानां तत् कार्यत्वमित्युक्तम् ॥७३॥

ननु यद्येवम्, तर्हि प्रधानकार्यं जगदिति सिद्धान्तहानिरित्यत आह—

आद्यहेतुता तद्द्वारा पारम्पर्येणाणुवत्[2] ॥७४॥

१. उत्तरेषामिति भिक्षुः।

२. पारम्पर्येऽप्यणुवत् (पाठा०), भिक्षुरपि इत्थमेव पठति।

यथा मृत्पिण्डकार्यस्य घटस्य पारम्पर्येण[1] परमाणुकारणता, तथा प्रकृतेरपि मूलकारणता ॥७४॥

प्रकृतिपुरुषयोर्नित्यत्वात् सृष्ट्यादौ कस्य कारणत्वमित्यत्राह—

पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥७५॥

न पूर्वभावित्वमात्रेण कारणत्वम्, किन्त्वन्वयव्यतिरेकाभ्याम्। द्वयोर्मध्ये एकतरस्य पुरुषस्य कारणत्वयोग्यताहानिरविकारित्वश्रुतेः । अतोऽन्यतरस्य प्रधानस्य कारणत्वयोगः ॥७५॥

अविवादात् परमाणूनामेव कारणत्वमस्त्वित्यत आह—

परिच्छिन्नत्वान्न सर्वोपादानम् ॥७६॥

यत् परिच्छिन्नं न तत् सर्वोपादानम्, यथा न तन्तुर्घटस्य कारणम्, तस्मात् पदार्थानां पृथक् पृथक् कारणं वक्तव्यम्। एककारणत्वे च लाघवं स्यादिति ॥७६॥

अत्र श्रुतिं प्रमाणयति—

तदुत्पत्तिश्रुतेश्च ॥७७॥

युक्तिस्तावत् प्रोक्ता। श्रुतिरपि प्रधानस्य जगत्कारणतामाह- "प्रधानाज्जगज्जायते"[2] इति ॥७७॥

---

१. पारम्पर्येऽपि (पाठा०)।

२. नैतादृशं किमपि वाक्यं प्रचलितासु श्रुतिषूपलभ्यते। 'प्रधानस्यात्मख्यापनार्था प्रवृत्तिः' इति श्रुतिस्तु व्यासभाष्ये उद्धृता (२।२३)। श्रुतौ जगदुपादानवाची प्रधानशब्दोऽस्तीति शान्तिपर्वण्युक्तम्—"त्रिगुणोऽसौ महाज्ञात प्रधान इति वै श्रुतिः" (२३८।२६)। सृष्टिप्रसङ्गे विष्णुपुराण उक्तम्—"प्रधानानुग्रहेण च" (१।१।५४)। अत्र वायुः "अव्यक्तानुग्रहेण च" इत्याह (४।७४)।

प्रागसतो घटस्य भवनं दृश्यते। अतो नियतपूर्वभावित्वात् प्रागभावः कारणमस्त्वित्यत आह—

नावस्तुनो वस्तुसिद्धिः ॥७८॥

यद्यभावाद् भावोत्पत्तिः स्यात्, कारणरूपं कार्यं दृश्यते, इति जगतोऽप्यवस्तुत्वं स्यात् ॥७८॥

भवतु जगदप्यवस्तु, का नो हानिरित्यत आह—

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥७९॥

शुक्तौ रजतज्ञानम्, तत्र 'नेदं रजतम्' इति ज्ञानाद्रजतबाधः। न चात्र 'नेदं भावरूपं जगत्' इति कस्यापि ज्ञानं येनास्य भावरूपबाधः स्यात्। दुष्टकारणजन्यत्वाच्च मिथ्येत्यवगम्यते. यथा काचकामलादिदोषात् पीतशङ्खज्ञानं कस्यचित्; अत्र च जगज्ज्ञानस्य सर्वेषां सर्वदा सत्यत्वाच्च न दोषोऽस्तीति गम्यते। तस्मात् नावस्तु जगदिति ॥७९॥

नन्वभावः कारणमस्तु तथाप्यभावत्वं न जगतो भविष्यतीत्यत्राह—

भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तत्सिद्धिः ॥८०॥

भावे उपादानकारणे 'कारणगुणः कार्ये' इति तद्योगेन भावयोगेन तत्सिद्धिः कार्यस्य वस्तुत्वसिद्धिः। अभावे जगदुपादानस्याभावत्वे तदभावाज्जगदभावस्यावश्यंभावात् कुतस्तत् सिद्धिः, अभावस्य[1] अभावरूपत्वादिति ॥८०॥

अथ कर्मैव जगत्कारणमस्तु, किं प्रधानकल्पनयेत्यत आह—

न कर्मण उपादानत्वायोगात् ॥८१॥

---

१. अभावकारणकस्य ( पाठा० )।

निमित्तकारणमदृष्टमस्तु, धर्माधर्मयोस्तूपादानकारणत्वं न क्वचिद् दृष्टम् । प्रकृतिपुरुषविवेकदर्शनान्मुक्तिरिति प्रकृतिस्वीकारः ॥८१॥

वेदोक्तार्थानुष्ठानादेव मुक्तिसम्भवात् किं प्रकृत्येत्यत आह—

**नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥८२॥**

वेदादनुश्रूयत इत्यानुश्रविको यागादिः, तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात्—कार्यत्वेनानित्यत्वाद् मुक्तस्य पुनः संसारानुवृत्तियोगः, तस्मादपुरुषार्थत्वम् ॥८२॥

पुरुषार्थत्वं दर्शयति—

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥८३॥**

तत्र—प्रकृतिपुरुषयोः प्राप्तविवेकस्य विवेकज्ञानादनावृत्तिश्रुतिः 'न स पुनरावर्त्तते" इति ( छान्दोग्य० ८।१५।१ ) ॥८३॥

विपक्षे दोषमाह—

**दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोक्षः[1] ॥८४॥**

यदि कर्मसाध्यो मोक्षो भवेत्, कर्मणो दुःखबहुलत्वात् तत्कार्यो मोक्षोऽपि दुःखबहुलः स्यात् । अन्ततः क्षयित्वेनापि दुःखं स्यात् । न हि जाड्यार्त्तस्य जाड्यविमोक्षो जलाभिषेकात्, प्रत्युत जाड्यमेवेति ॥८४॥

दुःखस्य कर्मसाध्यत्वमप्रयोजकम्, किन्तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात् । तथा च श्रुतिः—"कर्म-

---

१. गार्वे खलु विमोक्षेत्यत्र विमोकेति पठति, वृत्तौ तु विमोक्षेत्येव पदं स्थापयतीति चित्रम् ।

भिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमाणाः। अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः"[1] इति। अत्राह—

काम्येऽकाम्येऽपि[2] साध्यत्वाविशेषात् ॥८५॥

मा भूत् निष्कामकर्मसाध्यं दुःखम्, तथापि काम्यात् निष्कामकर्मविशेषेऽपि मोक्षस्य कर्मसाध्यत्वमविशिष्टम्। साध्यत्वात् क्षयित्वेन पुनरपि दुःखं स्यादिति भावः। निष्कामकर्मणो मोक्षसाधनत्वश्रुतिश्च ज्ञानार्था, ज्ञानाच्च मोक्ष इति पारम्पर्येण मोक्षसाधनत्वम् ॥८५॥

यदि प्रकृतिपुरुषविवेकज्ञानाद् मोक्षो भवेत्, तथापि तस्य भव्यत्वेन क्षयित्वात् पुनरपि संसार इति वादिप्रतिवादिनोस्तुल्यत्वमिति मत्वाह—

निजमुक्तस्य बन्धध्वंसमात्रं परं न समत्वम्[3] ॥८६॥

निजमुक्तस्य स्वभावमुक्तस्य बन्धध्वंसः; बन्धोऽविवेकः, तद्विरोधेनाविवेकध्वंसोऽविवेकनाशः। अविवेकनाशस्य च प्रध्वंसत्वात् कुतः संसारस्य पुनरावर्त्तनमिति न समत्वम्[4] ॥८६॥

पञ्चविंशतिर्गण (१।६१) इत्युक्तम्, तत्सिद्धिश्च न प्रमाणेन विना, इति तद् दर्शयति—

---

१. सांख्यतत्त्वकौमुद्यां (२) वाक्यमिदमुद्धृतम्।

२. काम्याकाम्येऽपि (पाठा०)।

३. समानत्वम् (पाठा०)।

४. समानत्वम् (पाठा०)।

**द्वयोरेकतरस्य [1]वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत्तत् प्रमाणम् ॥८७॥**

द्वयोरिति इन्द्रियार्थयोर्विद्यमानयोः प्रत्यक्षे । एकतरस्य वाऽपीति[2] विद्यमानस्य लिङ्गस्य शब्दस्य वानुमाने शब्दे च । असन्निकृष्टार्थपरिच्छित्तिरिति अपरिच्छिन्नार्थपरिच्छित्तिः प्रमा प्रमितिः फलम् । एतेनानवगतार्थगन्तृ प्रमाणमित्युक्तम् । प्रमा-साधकतमं यत् तत् प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥८७॥

कति प्रमाणानीत्यत आह—

**त्रिविधं प्रमाणम् तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥८८॥**

प्रत्यक्षानुमानशब्दाः प्रमाणानीति । किमुपमानार्थापत्त्यभाव-सम्भवैतिह्यानि न स्युरिति ? अत्रोक्तं तत्सिद्धावित्यादि । प्रमेयव्यवस्थार्थं प्रमाणस्वीकारः । त्रिविधप्रमाणसिद्धौ सर्व-प्रमाणानां प्रमेयव्यवस्थासिद्धेः नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेष्वेषामन्तर्भावादित्यर्थः । इन्द्रियार्थसन्निकर्षान्वय-व्यतिरेकादिना यथायथं प्रत्यक्षादिषु सूरिभिरन्तर्भावितत्वात् केवलमधिकः संज्ञाभेदः कृत इति नाधिकत्वेन प्रमाणसिद्धिरिति निष्कर्षः ॥८८॥

विशेषलक्षणमाह—

**यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥८९॥**

यत् सम्बन्धसिद्धमित्यनुमानशब्दौ व्यवच्छिन्नौ । तदाकारो-ल्लेखि घटाद्याकारोल्लेखि । तत् प्रत्यक्षमित्यनेन सविकल्पकमपि

---

१. अपीति व्याख्यान्तरे न पठ्यते, चेति कोशान्तरे पठ्यते ।

२. चापीति ( पाठा० ) ।

प्रत्यक्षं संगृहीतम् । बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति वर्णयन्ति "कल्पनापोढमभ्रान्तं प्रत्यक्षम्" इति (न्यायबिन्दु १।४) नामजात्यादियोजनात्मिका प्रतीतिः कल्पना[1]; सा च सविकल्पकेऽप्यस्तीति न प्रत्यक्षं प्रमाणम् । तन्न, अदुष्टसाक्षात्कारिप्रमाजनकसामग्रीजनितं प्रत्यक्षम् । तदुभयं सविकल्पकं निर्विकल्पकञ्च । किन्तु सादृश्यात् संस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादिसंविदुत्पद्यते, अतएवाधिकप्राप्त्या सविकल्पकमिति विशेषसंज्ञा । न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो वा जनितः। अथ स्मृत्या व्यवहितत्वात्[2] न प्रमाणम्, अहो नैपुण्यम्, यत् सहकारिप्रामाण्यं बाधते । तथा च—"संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते । संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ ततः[3] परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ॥" इति ॥८९॥

ननु योगिप्रत्यक्षाव्यापकत्वाद् नेदं प्रत्यक्षलक्षणं युक्तमित्यत आह—

**योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥९०॥**

बाह्यप्रत्यक्षलक्षणमिदं लौकिकम्, योगिप्रत्यक्षं त्वबाह्यमलौकिकं च । अतो नाव्यापकत्वदोषः ॥९०॥

अथवा अनेन लक्षणेन योगिप्रत्यक्षस्यापि संग्रह इति पक्षान्तरमाह—

**लीनवस्तुलब्धातिशयसम्बन्धान्न दोषः[4] ॥९१॥**

---

१. अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना ( न्यायबिन्दु १।५ )

२. मुहितत्त्वात् ( पाठा० ) ।

३. द्र० श्लोकवार्तिकप्रत्यक्षसूत्रीय १२० श्लोकः ।

४. वा न दोष इत्यन्ये व्याख्याकृतः ।

सत्कार्यस्थितेर्नष्टमपि स्वकारणे लीनं भूतत्वेनास्ति, भविष्यदपि स्वकारणेऽनागतत्वेनास्ति। योगजधर्मानुग्रहाल्लब्धातिशयस्य योगिन एव प्रधानसम्बन्धात् सर्वदेशकालादिसम्बन्ध इति नाव्यापकत्वदोषः ॥९१॥

ईश्वरप्रत्यक्षस्यालक्षणमित्यत आह—

ईश्वरासिद्धेः ॥९२॥

यदीश्वरसिद्धौ प्रमाणमस्ति, तदा तत्प्रत्यक्षचिन्ता उपपद्यते। तदेव तु नास्ति। क्षित्यादि सकर्तृकं कार्यत्वादिति[1] प्रमाणमस्तीति चेत्, स किं शरीरी अशरीरी वा—इति उभयथापि कर्तृत्वासम्भवाद् विशेषवादिनां कार्यत्वस्याभासत्वान्न तत् प्रमाणम्। एतदन्यत्र बहु प्रपञ्चितम्[2] ॥९२॥

युक्त्यन्तरमाह—

मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥९३॥

स किं बद्धो वा मुक्तो वा ? बद्धस्य धर्माधर्मयोगाद् नेश्वरत्वम्। मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावाद् न कर्तृत्वमिति नेश्वरसिद्धिः। अथान्य एवासौ जीवन्मुक्त इति। एवं तर्हि दृष्टान्ताभावादसाधारणत्वम् ॥९३॥

एतदेवाह—

उभयथाप्यसत्करत्वम् ॥९४॥

---

१. एतादृशमनुमानं सिद्धान्तमुक्तावलीग्रन्थेऽन्यत्र चास्ति।

२. अन्यत्रेति पदेन किमन्यो वृत्तिकृद्ग्रन्थो ज्ञेयः, आहोस्विद् पूर्वमीमांसीयो ग्रन्थविशेष इति न स्पष्टं ज्ञायते।

उत्तरव्याख्यानमेतत् सूत्रम् । असत्करत्वं प्रोक्तकारणात् कर्तृत्वाभावसाधकम् ॥९४॥

एवं तर्हि "स हि सर्ववित् सर्वकर्त्ता"[1] इत्यादिश्रुतिबाधः स्यादित्यात्राह—

मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा ॥९५॥

रागाद्यभावान्मुक्तात्मन इव मुक्तात्मनः, न तु मुक्तस्य, तस्य सङ्कल्पकर्त्तृत्वाद्यभावात्। तत्प्रशंसा, विधिवाक्योत्तम्भनाय। उपासासिद्धस्य वेति उपासनया लब्धातिशयस्य योगिनोऽणिमादिसिद्धस्य प्रशंसा अभ्यासोत्तम्भनायेति ॥९५॥

चेतनाधिष्ठानं विना नाचेतनं प्रवर्त्तत इत्यतोऽपि नेश्वरसिद्धिरित्याह—

तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥

यथा प्रतिबिम्बितशरीरे मणौ चलति अचलति शरीरे शरीरं चलतीत्यभिमानः, तथा तत्सन्निधानात् प्रकृतिप्रतिबिम्बिततत्त्वादात्मनः प्रकृतेः कर्तृत्वं भोक्तृत्वमधिष्ठातृत्वमात्मनोऽभिमन्यते। तस्माच्चेतनोऽधिष्ठातेति भ्रान्तिरिति । तथा च "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ( गीता ३।२७ ) ॥९६॥

यदि न चेतनाधिष्ठातृत्वं तर्हि मृतशरीरस्याहारादिक्रिया स्यादित्यत आह—

---

१. सहीति वचनं सांख्यसूत्रे एव पठ्यते ( ३।५६ ), न प्रचलितासु श्रुतिषु, यद्यप्येवंजातीयकं वचनं श्रुतावुपलभ्यते। अत्र बृहदारण्यकगतं 'स वा एष महानज आत्मा……' वाक्यं द्रष्टव्यम् ( ४।४।२२ )।

विशेषकार्येऽपि[1] जीवानाम् ॥९७॥

वायुयुक्तो बुद्ध्यादिर्जीवः, न त्वात्मा जीवः। आहारादि-विशेषकार्येऽपि जीवानामेव कर्तृत्वम्, आत्मनोऽपरिणामित्वात् ॥९७॥

आत्मनि चेज् ज्ञानं नास्ति, कथं ज्ञानायोपदेश इत्यत्राह—

सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥९८॥

उत्तरसूत्रस्यान्तःकरणस्येतीदमावर्त्तनीयम्[2]। तेनायमर्थः—सिद्धरूपबोद्धृत्वात्तात्त्विकरूपबोद्धृत्वान्महतोऽन्तःकरणस्य वाक्यार्थोपदेशः, तत्प्रतिबिम्बितत्वाच्च पुरुषस्य बोद्धृत्वाभिमानः॥ ९८ ॥

एतदेव स्पष्टयति—

अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥९९॥

अन्तःकरणस्य बुद्धेः पुरुषच्छायापत्त्या तच्चैतन्योज्ज्वलितस्य चेतनत्वाभिमानादधिष्ठातृत्वम्। लोहवदिति—यथा आकर्षको लोहो निष्क्रियोऽपि सन्निधिमात्रेणाकर्षति तथा॥ ९९ ॥

अनुमानलक्षणमाह—

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥१००॥

अविनाभावदर्शिनो व्याप्यज्ञानादनु व्यापकज्ञानमनु-

---

१. विशेषकार्येष्वपि इति सर्वटीकान्तरकृत्संमतः पाठ इति गार्बेमहोदयः। परन्तु भिक्षुव्याख्याने 'विशेषकार्ये विसर्गाख्ये' इति दृश्यते, अत एकवचनान्तपाठो भिक्षुसंमत इति गम्यते।

२. अन्तःकरणस्येति पदमनुषजनीयम् (पाठा०)। अन्तःकरणस्येत्यपि पदमुत्तरसूत्रगतमत्र क्वचित् कोशे पठ्यते।

मानम्। ( [1]प्रतिबन्धो व्याप्तिः। व्याप्यदर्शनाद् व्यापकज्ञानं वृत्तिरूपमनुमानं प्रमाणमित्यर्थः। अनुमितिस्तु पौरुषेयो बोध इति )। अनेनान्वयि, व्यतिरेकि, अन्वयव्यतिरेकि, पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्च संगृहीतम्। वादिनामपि लक्षणान्यत्रैवान्तर्हितानीति। तथा च—"अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्" (द्र० प्रशस्तपादभाष्यस्थमनुमानप्रकरणम् ) ॥१००॥

शब्दं लक्षयति—

आप्तोपदेशः शब्दः ॥१०१॥

आप्तोपदेशः शब्दः। आप्तो युक्तः, न त्वाप्तेन कृतः, अपौरुषेयत्वाद्वेदस्य। अपौरुषेयत्वञ्च पञ्चमाध्याये 'न पौरुषेयत्वम्' इति सूत्रे ( ५।४६ ) प्रतिपादयिष्यामः[2]। शब्द इति कारणकथनम्, फलन्तु शब्दजन्यं ज्ञानं शब्दः, कार्ये कारणोपचारात्। शाक्यादिवादानां वेदविरोधेनायुक्तत्वादाभासत्वम् ॥ १०१ ॥

प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भः, न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह—

उभयसिद्धिः प्रमाणात्तदुपदेशः ॥१०२॥

वक्ष्यमाणात् प्रमाणाद् उभयोः प्रकृतिपुरुषयोः सिद्धिर्ज्ञानम्। तस्मात्तद्विवेकार्थमुपदेशो युक्त इति ॥ १०२ ॥

किं तत् प्रमाणमित्यत्राह—

---

१. ( ) एतच्चिह्नितोंऽशो भाष्ये विद्यते। सर्वेषु वृत्तिकोशेषु चायमंशो न पठ्यते, अतो गम्यते भाष्यतोंऽशोऽयं केनचिदिह स्थापितः।

२. ५।४६ वृत्तौ न विशिष्टं किमपि अनिरुद्धेनोक्तम्।

सामान्यतोदृष्टादुभयसिद्धिः ॥१०३॥

प्रकृतेरप्रत्यक्षत्वाद् यत् कार्यं तत् कारणगुणपूर्वकम्, कार्यं च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धिः। आत्मनोऽप्रत्यक्षत्वेऽपि यत् संहतं तत् परार्थमित्यसंहतः परः सिद्धः। वक्ष्यति च "संहतपरार्थत्वात्" इति ( १।१४० ) ॥ १०३ ॥

प्रकृतेर्नित्यत्वात् प्रवृत्तिशीलत्वाच्च सर्वदा भोग इत्यनिर्मोक्षः स्यादित्यत आह—

चिदवसानो भोगः ॥१०४॥

चिद् आत्मा, तद्विवेकावसानो भोगः। यथा अनादिरपि प्रागभावो नश्यति तथा नित्यायाः प्रकृतेर्विवेकज्ञानपर्यन्तः प्रसव इत्यभिप्रायः। अथाभाव एवं न तु भाव इति, न अभावत्वं न प्रयोजकम्; प्रध्वंसाभावेऽतथादर्शनात्। अन्यत्र यथादर्शनं व्यवस्था[1], अत्राप्येवम् ॥ १०४ ॥

यदि कर्तृ प्रधानं, भोक्ता पुरुषः, अन्यकृतकर्मणोऽन्यो भोक्तेति स्यादित्यत आह—

अकर्त्तुरपि फलोपभोगोऽन्नाद्यवत् ॥१०५॥

यथा सूपकारस्यान्नादिकर्तृत्वम्, अकर्त्तुरीश्वरस्य फलोपभोक्तृत्वम्, तथात्रापि। अथ यथा उद्देश्यत्वेन कर्तृत्वमीश्वरस्य, तथात्राप्यात्मोद्देश्यत्वेन प्रकृतेः प्रसव इति ॥ १०५ ॥

व्यवहारसिद्धान्तमुक्त्वा स्वसिद्धान्तमाह—

अविवेकाद्वा[2] तत्सिद्धेः कर्तुः फलावगमः ॥१०६॥

---

१. अथ यथादर्शनं व्यवस्था ( पाठा० )।

२. वेति न पठ्यते क्वचित्। फलावगतः ( पाठा० )।

न पुरुषः कर्ता न भोक्ता, किन्तु महत्तत्त्वप्रतिबिम्बितत्वात् कर्तृत्वाभिमानः। अविवेकाद्धेति प्रकृतिपुरुषयोर्विवेकाग्रहात्। तत्सिद्धेः कर्तुः फलोपभोगाभिमानसिद्धेरिति ॥ १०६ ॥

एतद्व्यतिरेकमाह—

नोभयञ्च तत्त्वाख्याने ॥१०७॥

विवेकात्तत्त्वज्ञाने नोभयम्—न कर्तृत्वं न भोक्तृत्वमिति ।१०७

प्रमाणमुक्तवा प्रमेयव्यवस्थामाह—

विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ।१०८

इन्द्रियस्योपादानात् सम्बन्धाद्विषयः, इन्द्रियस्य हानात् सम्बन्धाभावादविषयः। असम्बन्धश्चातिदूरादेरयोग्यत्वात्। अतिदूराद्वियति पक्षी नोपलभ्यते, अतिसामीप्याल्लोचनस्थाञ्जनम्, व्यवधानात् कुड्यान्तःस्थं वस्तु। मनोऽनवस्थानाच्छोकादिग्रस्तस्य पार्श्वस्थवस्त्वग्रहणम्, सौक्ष्म्यादणोः, अभिभवान्मर्दलध्वनिना शङ्खध्वनेरित्यादि ॥ १०८ ॥

प्रकृतेः कथमनुपलब्धिरित्यत आह—

सौक्ष्म्यादनुपलब्धिः[1] ॥१०९॥

दुरूहत्वं सौक्ष्म्यं न त्वणुत्वम्, प्रकृतेर्विभुत्वात् ॥ १०९ ॥

कथं तर्हि प्रकृतेर्व्यवस्थेत्यत आह—

कार्यदर्शनात्तदुपलब्धेः ॥११०॥

यथा घटदर्शनात् परमाणुज्ञानं तथा त्रिगुणकार्यदर्शनात् प्रकृतिज्ञानम् ॥ ११० ॥

---

१. तदनुपलब्धिरित्यन्ये व्याख्याकाराः।

ब्रह्मकारणं जगदिति केचित्। परमाणुकारणमित्यन्ये। प्रधानकारणमिति वृद्धाः। अतः संशयमाह—

वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥१११॥

तदसिद्धिः प्रधानासिद्धिः॥ १११॥

सिद्धान्तमाह—

तथाप्येकतरदृष्टयान्यतर[1]सिद्धेर्नापलापः ॥११२॥

यदि वादिविप्रतिपत्तिमात्रेण पक्षासिद्धत्वम्, विपक्षेऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः? यदि व्याप्यज्ञानाद् व्यापकज्ञानस्याविनाभावित्वात् पक्षसिद्धिः, ममाप्येवमिति न कार्यादनुमानापलापः॥ ११२॥

कार्यात् कारणमस्तु, तच्च प्रकृतिरिति कथमित्यत आह—

त्रिविधविरोधापत्तेः[2] ॥११३॥

त्रिविधो गुणः—सत्त्वरजस्तमांसि। तद्विरोधस्तच्छून्यं जगद्भवेत्, न चैवं दृश्यत इति॥ ११३॥

कार्यस्य किं सत उत्पत्तिरसतो वेति संशयं निरस्यति—

नासदुत्पादो नृशृङ्गवत् ॥११४॥

उत्पाद उत्पत्तिः। असदेकस्वभावं नृशृङ्गादि। सदेकस्वभावमाकाशादि। सदसत्स्वभावा घटादय इति कथं नृशृङ्गतुल्यत्वम्? तन्न; घटादीनां प्रागभावसमयेऽसत्त्वम्,

---

१. दृष्टयैकतरेति अन्ये व्याख्याकाराः।

२. पत्तेश्चेत्यन्ये व्याख्याकाराः।

नृश्‍ृङ्गादीनान्तु सर्वदाऽसत्त्वमिति द्वयोः को विशेषः? घटादीनां जन्मदर्शनं विशेष इति चेत्? एतदेव चिन्त्यते, एतदेवोत्तरमित्यहो नैपुण्यम्! ॥११४॥

सत्कार्ये न्यायमाह—

उपादाननियमात् ॥११५॥

कारणसम्बन्धात् कार्यस्य। सम्बन्धश्च विद्यमानयोरेव, अन्यथा सर्वदा सर्वत्र सर्वकार्योत्पत्तिः स्यात् ॥ ११५ ॥

एतदेवाह—

सर्वत्र सर्वदा सर्वासम्भवात् ॥११६॥

व्यक्तम् ॥ ११६ ॥

ननूपादानकारणत्वाविशेषेऽपि यस्य यच् शक्यं तदेव तत् करोति। नहि तन्तुर्घटस्य कारणं भवति, कुतः सर्वसम्भव इत्यत आह—

शक्तस्य[1] शक्यकरणात्[2] ॥११७॥

शक्तस्य शक्तिः शक्यविषया वा? न वा? शक्यविषया चेत्, शक्यस्य सत्त्वं वाच्यम्। नेति पक्षे तु तन्तुतो घटोत्पत्तिस्तदवस्था ॥११८॥

अपरं न्यायमाह—

कारणभावाच्च ॥११८॥

कार्यकारणयोरेकत्वात्। घटाकारेण परिणतोऽपि मृद्रूपतां न जहाति। न च सदसतोरेकत्वम्, यदि द्वयोरेकत्वं मृत्पिण्डे-

---

१. शक्यस्य (पाठा०)। २. कारणात् (पाठा०)।

नापि जलाहरणं कर्त्तव्यमिति। भवेदेवम्, यद्यत्यन्ताभेदः स्यात्; भेदाभेदपक्षे तु न कश्चिद् दोष इति। तथा च—"असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः। असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः[१]।" "नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः"(गीता २।१६) ॥११८॥

शङ्कते—

[२]भावे भावयोगश्चेन् न वाच्यम् ॥११९॥

यदि भावे कारणे भावस्य कार्यस्य विद्यमानस्य योग उत्पत्तिः, तदा भविष्यति घटः, उत्पद्यते, नष्ट इति व्यपदेशो न स्यात् ॥११९॥

सिद्धान्तमाह—

न अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥१२०॥

यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभिव्यज्यते, तथा कुलालव्यापाराद्घटोऽभिव्यज्यते, मुद्गराभिघातात्तिरोभूयते च। दृष्टाश्चाभिव्यक्तिः पीडनेन तिलेषु तैलस्य, दोहनेन गवि पयसः, अवघातेन धान्ये तण्डुलस्येत्यादि। तस्मादभिव्यक्तिनिबन्धनौ शब्दप्रयोगार्थक्रियाभेदाविति ॥१२०॥

अस्त्वभिव्यक्तिनिबन्धनोत्पत्तिः, किन्निबन्धनो नाश इत्यत आह—

नाशः कारणलयः ॥१२१॥

---

२. श्लोकोऽयमज्ञातकर्तृको बहुषु ग्रन्थेषूद्धृतश्च (द्र० सर्वदर्शनसंग्रहे सांख्यदर्शनप्रकरणम्)।

३. न भावे भावयोगश्चेदित्यन्ये व्याख्याकृतः।

मुद्गराभिघाताद् घटस्य कारणे लयः तन्निबन्धनो नाश इति शब्दार्थक्रियाभेदौ। यदि लयः, तर्हि पुनरुद्भवो दृश्येत; न च दृश्यत इति चेत्? मूढैर्न दृश्यते, विवेकिभिर्दृश्यत एव। तथाहि—तन्तौ नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पासवृक्षरूपेण परिणामः, तस्य पुनः पुष्पफलतन्तुरूपेण परिणामः। एवं सर्वे भावाः ॥१२१॥

किमभिव्यक्तिः सती असती वा? सती चेत्, नित्यं कार्योपलब्धिः स्यात्; असती चेत्, सत्कार्यहानिः स्यात्। तस्या अपि अभिव्यक्तिरन्या तस्या अप्यन्या—इत्यनवस्था स्यादित्यत आह—

पारम्पर्यतोऽन्वेषणाद्बीजाङ्कुरवत् ॥१२२॥

भवत्वभिव्यक्तिसहस्रम्, तथापि न दोषः, अनादित्वाद्बीजाङ्कुरवदिति ॥१२२॥

युक्त्यन्तरमाह—

उत्पत्तिवद्वाऽदोषः ॥१२३॥

किमुत्पत्तिरुत्पद्यते न वा? उत्पद्यते चेत्, तर्हि तस्या अप्युत्पत्तिः, तस्या अप्युत्पत्तिरित्यनवस्था। नोत्पद्यते चेत्, किमसत्त्वान्नित्यत्वाद्वा? यद्यसत्त्वात्, कदाचिदप्युत्पत्तिर्नास्तीति सर्वदानुपलम्भः स्यात्। अथ नित्यत्वात्, सर्वदा कार्योत्पत्तिः स्यात्। अथोत्पत्तेः स्वयमेवोत्पत्तिरूपत्वात् किमुत्पत्त्यन्तरकल्पनयेति चेत्? तर्हि अभिव्यक्तेरपि अभिव्यक्तिरूपत्वात् किमभिव्यक्त्यन्तरकल्पनयेति तुल्यम्। तत्र यस्तव सिद्धान्तः, सोऽस्माकमपि ॥ १२३ ॥

प्रकृतिकार्याणामन्योऽन्यं साधर्म्यमाह—

हेतुमदनित्यं[1] सक्रियमनेकमाश्रितं लिङ्गम् ॥१२४॥

हेतुमत् कारणवत्। अनित्यं विनाशि। सक्रियमुपात्तं देहं त्यजत्। अनेकं पुरुषभेदाद् बहु। आश्रितं स्वकारणे। लिङ्गं स्वकारणे लयं गच्छतीति ॥ १२४ ॥

यदि पञ्चविंशतितत्त्वं तत् किं ज्ञानसुखादीनां सामान्यकर्मणाञ्चाभाव एव ? तथाच दृष्टपरित्यागः स्यादित्यत आह—

आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥१२५॥

आञ्जस्यात् स्वरूपतः चतुर्विंशतितत्त्वादभेदतस्तल्लक्षणयोगात् गुणसामान्यादीनां तत्सिद्धिस्तेष्वेवान्तर्भावात् सिद्धिः। वाशब्दः पक्षान्तरं सूचयति। 'प्रधानव्यपदेशाद्वा' गुणादीनां पारम्पर्येण प्रधानकार्यत्वेन कार्यकारणयोरभेदात् प्रधानव्यपदेशाद् एव गुणादिसिद्धिः, न त्वभावादननुकीर्त्तनम् ॥१२५॥

प्रकृतिकार्ययोः साधर्म्यमाह—

त्रिगुणाचेतनत्वादि द्वयोः ॥१२६॥

त्रिगुणमचेतनम्। आदिशब्दात् परार्थत्वम्। द्वयोरिति कार्यकारणयोः ॥ १२६ ॥

प्रकृतिभागस्य त्रिगुणस्यान्योऽन्यवैधर्म्यमाह—

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं[2] वैधर्म्यम् १२७॥

प्रीतिः सुखम्। आदिशब्दाल्लघु प्रकाशकञ्च सत्त्वम्।

---

१. भाष्ये अव्यापीति अनित्यमित्यस्मादनन्तरं पठ्यते।

२. अन्योन्यवैधर्म्यम् ( पाठा० )

अप्रीतिर्दुःखम्। आदिशब्दादुपष्टम्भकं चलञ्च रजः। विषादो मोहः। आदिशब्दाद् गुरु वरणकञ्च तमः॥ १२७॥

तेषां वैधर्म्यकथनावसरे साधर्म्यमाह—

लघ्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यमितरेषाम्[1] ॥१२८॥

लघुचलगुरुत्वैः। अनेन वैधर्म्यमुक्तम्। आदिशब्दात् साधर्म्यं सूचितम्। तच्च पुरुषार्थत्वम्, अन्योऽन्याभिभवजनन-मिथुनवृत्तित्वम्॥ १२८॥

हेतुमदित्यादिना महदादीनां कार्यत्वमुक्तम्, तत्र प्रमाण-माह—

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥१२९॥

प्रकृतिपुरुषयोर्नित्ययोरन्यत्वात्। शेषं व्यक्तम्॥ १२९॥

हेत्वन्तरमाह—

[2]परिमाणात् ॥१३०॥

परिमितत्वात्॥ १३०॥

अपरां युक्तिमाह—

समन्वयात् ॥१३१॥

प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्वपदार्थेषु दर्शनात्॥ १३१॥

तदेवाह—

शक्तितश्चेति ॥१३२॥

---

१. लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानामिति व्याख्यान्तरकृतः। क्वचिद् वृत्तावपि इतरेषामित्यत्र गुणानामिति पठ्यते।

२. परिणामाद् इति क्वचित् पठ्यते, सोऽपपाठः।

कारणशक्त्या कार्यं प्रवर्त्तत इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन कार्यं जनयन्ति, अन्यथा प्रवृत्तिशीलत्वात् सर्वदा कार्यं जनयेयुः ॥ १३२ ॥

व्यतिरेकमाह—

तद्धाने प्रकृतिः पुरुषो वा ॥१३३॥

कार्यमकार्यञ्चेति कोटिद्वयम् । कार्यताहाने प्रकृतौ पुरुषे वा महदादीनां प्रवेशः स्यादिति ॥ १३३ ॥

उभयकोटिविनिर्मुक्ता एव महादादयो भविष्यन्तीत्यत आह—

तयोरन्यत्वे[1] तुच्छत्वम्[2] ॥१३४॥

तयोः कार्याकार्ययोरन्यत्वे महदादीनां तुच्छरूपत्वमभावरूपत्वम् ॥ १३४ ॥

किमर्थं महदादयः कार्यत्वेन प्रकृतेर्लिङ्गम्, अविनाभावादेव लिङ्गं भविष्यन्तीत्यत्राह—

कार्यात् कारणानुमानं तत्साहित्यात् ॥१३५॥

भवत्वेवं यत्र कारणरूपं कार्ये न दृश्यते, यथा चन्द्रोदयात् समुद्रवृद्ध्यनुमानम् । अत्र तु प्रधानरूपस्य महदादौ दर्शनात् कार्यात् कारणानुमानमेव, तत्साहित्यात् प्रकृतिरूपस्य महदादौ दर्शनात् ॥ १३५ ॥

एवञ्चेन्महत्तत्त्वमेव जगत्कारणमस्तु, किं प्रधानेनेत्यत आह—

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥१३६॥

---

१. उभयोरप्यन्यत्वे ( पाठा० ) । २. तुच्छतेति व्याख्यान्तरे पठ्यते ।

त्रिगुणाल्लिङ्गात्—लयं गच्छतीति महत्तत्त्वात् प्रधानमनुमातव्यम्। महत्तत्त्वञ्चाध्यवसायरूपं व्यक्तं विनाशि प्रत्यक्षसिद्धम्; तेन लिङ्गयनुमानम् ॥ १३६ ॥

तथाप्यन्यदेव कारणं भविष्यति, किं प्रकृत्येत्यत्राह—

तत्कार्यतस्तत्सिद्धेर्नापलापः ॥१३७॥

तत् कारणं कार्यमकार्यं वा कार्यत्वे तत्कारणस्यापि तथात्वे सति अनवस्था। मूलकार्यत्वे तदेव सेति। तत्कार्यत इति प्रकृतिकार्यतः प्रकृतिसिद्धेर्नापलापः ॥ १३७ ॥

भवतु प्रकृतिसिद्धिः, पुरुषसिद्धिस्तु न स्यादेव। न हि तस्य कार्यमस्तीत्यत आह—

सामान्येन विवादाभावात् धर्मवन्न [1]तत्साधनम् ॥१३८॥

सामान्येन तावदात्मनि विवादो नास्ति। विशेषे हि विवादः—अनेकः, एकः, व्यापकः, अव्यापक इत्यादिः। यथा सर्वस्मिन् दर्शने धर्म इत्यविवादः, धर्मविशेषे हि विप्रतिपत्तिः। न तत्साधनं नहि तत्र कार्यकारणभावः साधनम्। अन्यत् साधनं वक्ष्यामीत्यभिसन्धिः ॥१३८॥

देहेन्द्रियादय एवात्मानः, किमन्यकल्पनयेत्यत आह—

शरीरादिव्यतिरिक्तः पुमान् ॥१३९॥

व्यक्तम् ॥१३९॥

अत्र न्यायमाह—

संहतपरार्थत्वात् ॥१४०॥

---

१. तदिति न सर्वत्र कोशेषु। अन्ये व्याख्यानकृतोऽपि तदिति पदं न पठन्ति।

यत् संहतं तदसंहतपरार्थम्। संहतपरार्थत्वेऽनवस्था स्यात्। संहतत्वञ्च गुणानामन्योन्यमिथुनभावेन कार्यकरणम्। अथवा द्रवकठिनतादिमत्त्वं संहतत्वम्। तच्च प्रकृत्यादौ तिरोभूतमस्ति, अन्यथा तत्कार्येषु संहततादर्शनप्रसङ्गात् ॥१४०॥

एतदेव स्पष्टयति—

त्रिगुणादिविपर्ययात् ॥१४१॥

पुरुषे त्रिगुणादिविपर्ययात् तददर्शनात्। आदिशब्दादन्येषां प्रकृतिधर्माणामप्यदर्शनादिति ॥१४१॥

न्यायान्तरमाह—

अधिष्ठानाच्चेति ॥१४२॥

चेतनो ह्यधिष्ठाता भवति, प्रकृतिश्च जडेत्यर्थः ॥१४२॥

युक्त्यन्तरमाह—

भोक्तृभावात् ॥१४३॥

भोग्या प्रकृतिः, भोक्ता पुरुषः। यद्यपि कूटस्थत्वादात्मनो भोक्तृत्वं नास्ति, तथापि बुद्धिच्छायापत्त्या एव भोक्तृत्वोक्तिरिति ॥१४३॥

मोक्षार्थं प्रवृत्तिः, सा किमात्मनः प्रकृतेर्वा इत्यत आह—

कैवल्यार्थं[1] प्रवृत्तेः[2] ॥१४४॥

त्रिगुणस्वभावत्वात् प्रकृतेर्न स्वभावप्रच्यवः। अनित्यत्वप्रसङ्गाच्च। यस्यौपाधिका एव गुणास्तस्यैव कैवल्यं सम्भवति। स चात्मेति ॥१४४॥

---

१. कैवल्यार्थे ( पाठा० )।

२. प्रवृत्तेश्चेत्यन्ये व्याख्याकाराः।

स किंरूप इत्यत आह—

जडप्रकाशायोगात् प्रकाशः ॥१४५॥

जडो न प्रकाशत इति सिद्धम् । यद्यात्मापि जडः स्यात्, तस्याप्यन्येन प्रकाशेन भवितव्यम् । लाघवाच्चात्मैव प्रकाशरूपोऽस्तु । श्रुतिश्च "येनेदं सर्वं विजानाति तत् केन विजानीयात्, विज्ञातारमरे केन विजानीयात्" इति (बृहदा० २।४।१४) ॥१४५॥

जडोऽप्यात्माऽस्तु चिद्धर्मा, तेन जगत् प्रकाशयति, न तु स चिद्रूप इत्यत्राह—

निर्गुणत्वात् न चिद्धर्मा ॥१४६॥

यद्यात्मनो धर्मयोगः स्यात्, तर्हि परिणामित्वमपि स्यात् । ततश्चानिर्मोक्ष इति ॥१४६॥

अत्र श्रुतिविरोधमाह—

श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥१४७॥

"असङ्गो ह्ययं पुरुषः" ( बृहदा० ४।३।१६ ) इत्यादिश्रुतिः । गुणयोगे सा बाधिता स्यात् ॥१४७॥

दूषणान्तरमाह—

सुषुप्त्याद्यसाक्षित्वम् ॥१४८॥

यद्यात्मा जडः स्यात्, सुषुप्त्यादौ असाक्षित्वमज्ञातृत्वं स्यात्, नचैवम्, सुखमहमस्वाप्समिति प्रतिभासनात् । आदिशब्दात् स्वप्नग्रहणम् ॥१४८॥

एक एवात्मेति वेदान्तिनः । तथाच—"नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः स भिद्यते शक्त्या मायया न स्वभावतः" ( कूर्म०, ईश्वरगीता; अन्नपूर्णोपनिषत् ५।७६ ) ।

अत्राह—

जन्मादिव्यवस्थातः पुरुषबहुत्वम्[1] ॥१४९॥

यद्येक आत्मा, एकस्मिन् जायमाने सर्वे जायेरन् ॥१४९॥

परमतमाशङ्कते—

उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥१५०

यथैकमाकाशं घटाद्युपाधिभेदाद् घटे नष्टे घटाकाशं नष्टमिति व्यपदिश्यते, तथैकात्मपक्षेऽपि देहावच्छेदात्तन्नाशे आत्मा नष्ट इति व्यपदेशमात्रं नानात्मपक्षेऽपि; अन्यथात्मनो नित्यत्वात् कथं जन्ममरणव्यवस्थेति ॥१५०॥

समाधानमाह—

उपाधिर्भिद्यते न तु तद्वान् ॥१५१॥

उपाधिर्भिद्यते । न चान्यनाशादन्यत्र नाशव्यवहारः, अतिप्रङ्गात् । एकात्मपक्षे च व्यक्त एव विरुद्धधर्माध्यासः, एकस्य बन्धमोक्षाभावात् । आकाशस्य तु धूमादियोगायोगावविरुद्धौ, संयोगस्य व्याप्यवृत्तित्वात् ॥१५१॥

एतेन किं स्यादित्यत आह—

[2]एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः ॥१५२॥

न विरुद्धधर्माध्यासो भवति ॥१५२॥

अन्यधर्मस्याप्यन्यत्रारोपो दृष्टः, यथा प्रकृतेः कर्तृत्वं पुरुषे ।

अत्राह—

---

१. पुरुषस्य बहुत्वम् ( पाठा० ) ।

२. परमेकत्वेन ( पाठा० ) ।

अन्यधर्मत्वेऽपि नारोपात्तत्सिद्धिरेकत्वात् ॥१५३॥

तत्र पुरुषकर्तृत्वं भ्रान्तं पुरुषाकर्तृत्वस्य सत्यत्वादारोपस्यासत्यत्वात्। न च सत्यासत्ययोः सम्बन्धस्तात्त्विको भवति। असङ्गित्वाद् आत्मनस्तु न जन्ममरणादि सम्भवति ॥१५३॥

एवञ्चेत्, श्रुतिविरोधः स्यात् । तथाच "एकमेवाद्वितीयं ब्रह्म"[1] (छान्दोग्य ६।२।१) "नेह नानास्ति किञ्चन" (बृहदा० ४।४।१९) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (कठ २।१।१०) अत्राह—

नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥१५४॥

व्यक्तम् ॥१५४॥

नन्वनेकात्मवादिनोऽपि एकस्यात्मनो बन्धमोक्षौ विरुद्धौ, इत्यत्राह—

विदितबन्धकारणस्य दृष्ट्या [2]तद्रूपम् ॥१५५॥

विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं यस्य, तस्य दृष्ट्या विवेकज्ञानेन तद्रूपं कैवल्यरूपम् ॥१५५॥

विवेकादर्शननिमित्तो बन्धो न तात्त्विकः, दर्शनाददर्शनं निवर्त्तत इति युक्तिः एवं चैकात्मपक्ष एव न्याय्यं पश्यामः, न नानात्मपक्ष इत्यत आह—

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥१५६॥

अन्धो न पश्यतीति चक्षुष्मानपि किं नोपलभते ? नानात्मवादिनामनेके न्यायाः सन्तीत्यर्थः ॥१५६॥

---

१. छान्दोग्यश्रुतौ 'सदेवेदमग्र आसीदेकमेवाद्वितीयम्' इत्येव पठ्यते ।

२. अतद्रूपमित्यन्ये व्याख्याकृतः ।

इतोऽपि नानात्मान इत्याह—

वामदेवादिर्मुक्तो नाद्वैतम् ॥१५७॥[1]

पुराणादौ श्रुतम्—"वामदेवो मुक्तः शुको मुक्तः[2]" इत्यादि। यद्येक एवात्मा एकमुक्तौ सर्वमुक्तेर्भेदश्रुतिबाधः स्यात् ॥१५७॥

नानात्मपक्षेऽप्यनादौ संसारे कदापि कोऽपि मुच्यते, इति क्रमेण सर्वमुक्तौ सर्वशून्यता स्यात्। एकात्मपक्षे तु उपाधिविगम एव मोक्ष इत्यत्राह—

अनादावद्ययावदभावाद् भविष्यदप्येवम् ॥१५८॥

अनादौ संसारे अद्ययावच्छून्यताया अदर्शनाद् भविष्यति मुक्तिरिति पक्षे नास्ति प्रमाणम् ॥१५८॥

समाधानान्तरमाह—

इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥१५९॥

अनन्तत्वादात्मनां क्रमेण मुक्तिरपि स्यात्, संसारोच्छेदोऽपि न स्यात्। इदानीमिव सर्वत्र भविष्यत्कालेऽपि मुक्तिर्भविष्यतीति नात्यन्तोच्छेदः स्यात्, प्रवाहनित्यत्वात्। उपाधिविगमो मोक्ष इति पक्षेऽपि सर्वशून्यताप्रसङ्ग इति तुल्योऽनुयोगः। यथा नानात्मनां क्रमेण मुक्तौ सर्वोच्छेदः, तथा सर्वकर्मोच्छेदे सर्वोपाधिनाशाज्जगच्छून्यं स्यात्। अथोपाधीनामनन्तत्वान्न शून्यता, इति नानात्मपक्षेऽपि तुल्यत्वम्। तथाच—

"अतएव हि विद्वत्सु मुच्यमानेषु सर्वदा[3]।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता" ॥१५९॥

किमात्मा बद्धो मुक्तो वा ? बद्धत्वे स्वरूपस्याप्रच्यवनाद्-

---

१. द्र०—बृहदारण्यक १।४।१०; ब्रह्मसूत्र १।१।३०।

२. द्र०—शान्तिपर्व ३३३ अ०।　　३. 'सन्ततम्'–( पाठा० )।

निर्मोक्षः, प्रच्यवेऽनित्यत्वम्। मुक्तत्वे व्यर्थं ध्यानादि, इत्यत आह—

व्यावृत्तोभयरूपः ॥१६०॥

न बद्धः, नायं मुच्यते, किन्तु नित्यमुक्तः। अज्ञाननाशस्तु ध्यानादिना क्रियत इति ॥१६०॥

आत्मनः साक्षित्वमुक्तम्। प्राप्तविवेकस्यापि साक्षित्वेऽनिर्मोक्ष इत्यत आह—

अक्षसम्बन्धात्[1] साक्षित्वम् ॥१६१॥

अक्षमिन्द्रियं, तत्सम्बन्धात् साक्षित्वम्। विवेके च क्वेन्द्रियसम्बन्ध इति ॥१६१॥

सर्वदा किंस्वरूप आत्मा, इत्यत्राह—

नित्यमुक्तत्वम् ॥१६२॥

स्पष्टम् ॥१६२॥

औदासीन्यं चेति[2] ॥१६३॥

व्यक्तम् ॥१६३॥

आत्मनः कर्तृत्वं श्रूयते, तत् कथमित्यत आह—

उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ॥१६४॥

चित्सान्निध्येन प्रकृत्युपरागादात्मनः कर्तृत्वं कर्तृत्वाभिमानः। चित्सान्निध्यादिति वीप्साध्यायपरिसमाप्तौ, श्रुतौ तथा दृष्टत्वादिति ॥१६४॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
विषयाध्यायः प्रथमः ॥



---

१. साक्षात् संबन्धादित्यन्ये व्याख्याकृतः। २. वेति पाठा०।

# द्वितीयः प्रधानकार्याध्यायः

अथ विषयनिरूपणानन्तरं प्रधानकार्यनिरूपणार्थं द्वितीयाध्यायारम्भः—

## विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥

स्वभावविमुक्त आत्मा, तस्याभिमानिकबन्धविमोक्षार्थं प्रधानस्य प्रवृत्तिः, जगत्कर्तृत्वमित्यर्थः । अयम्भावः—दुःखसृष्टौ स्वभावादेव वैराग्यान्मोक्षे वै पुरुषः प्रवर्त्तते । सुखसृष्टौ च दुःखशबलत्वात् सुखस्यापि दुःखपक्षनिक्षेपाद्वैराग्यमेवोपजायत इति स्थितिः । तच्च चतुर्विधम्—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति । तथा हि—हेयं दुःखमनागतम् (यो० सू० २।१६) एकविंशतिप्रकारम्—शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखदुःखञ्चेति । तत्र शरीरं दुःखायतनत्वाद् दुःखम्, इन्द्रियाणि विषयाः बुद्धयश्च तत्साधनभावाद् दुःखम्, सुखं दुःखानुषङ्गाद् यातनापीडासन्तापात्मकं सुखयत एवेति । तस्य निर्वर्त्तकमसाधारणकारणमविद्यातृष्णे धर्माधर्माविति । अविद्या विपरीतज्ञानम्, तत्संस्कारश्च विद्वद्भिरुक्तस्तृष्णादीनामसाधारणो हेतुः । दुःखहानञ्च दुःखोत्पत्तिनिवृत्तिरात्यन्तिकी, तस्योपायस्तत्त्वज्ञानमात्मविषयम्, ततोऽविद्याया निवृत्तेः । तथा चोक्तम्—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृहदा० २।४।५; ४।५।६), "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं

ध्येय एते दर्शनहेतवः"(बृहदारण्यकभाष्यवार्त्तिक १०८३),'तरति शोकमात्मवित्' ( छान्दोग्य ७।१।३ ) इति च। स द्विविधः-परश्चापरश्चेति। तथा चोक्तम्—"द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च" इति ( विष्णुपु० ६।५।६४ अन्यत्र च )। विद्यैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान् महेश्वरः सर्वज्ञः सकलजनानां विधाता, स कथं ज्ञातव्यः ? अनुमानाद्वा, आगमाद्वा ? तथा हि—'विवादाध्यासितमुपलब्धं सकारणकम् अभूत्वा भावित्वात्, चित्रवत्' इत्यनुमानम्। ततः सामान्येनावगतस्य योगेन विशेषतो ज्ञानम्। अपरस्य च जीवस्य स्वानुभवादेव सिद्धिः। तयोश्च परापरयोर्विवेकेन ज्ञानाय प्रकृतेः प्रवृत्तिः। तत्र परार्थता वक्ष्यते। स्वार्थता च, सा यं पुरुषं प्रत्यात्मानं विवेकेन दर्शितवती, तं प्रत्युदास्ते। अचेतनायाः प्रकृतेः कथं प्रवृत्तिः। दृष्टा अचेतनानामपि वृक्षाणां फलादिद्वारेण प्रवृत्तिरिति ॥ १ ॥

अथ के मोक्षाधिकारिण इत्यत्राह—

**विरक्तस्य तत्सिद्धेः ॥ २ ॥**

तथा च—श्रुतिः "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ( बृहदा० ४।४।२२ ) इति "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति ( बृहदा० ४।४।२३ ) इति च ॥ २ ॥

यदि वैराग्यात् श्रवणानन्तरं मोक्षः, तदा सर्वेषां गुरूपदेशानन्तरं मोक्षः स्यात्, न चैवं दृश्यत इत्यत्राह—

**न श्रवणमात्रात् तत्सिद्धिरनादिवासनाप्रबलत्वात् ॥ ३ ॥**

तत्सिद्धिः मोक्षसिद्धिः। न श्रवणानन्तरं मोक्षः, किन्तु यस्य नानादिवासनापाटव्यं, अनिविडा वासनेति यावत्, तस्य क्षिप्रं मुक्तिः, अन्यस्य च चिरेण ॥ ३ ॥

युक्त्यन्तरमाह—

**बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥**

यथैकस्य बहवो भृत्या आराधनापराधाभ्यां केचिन्मुच्यन्ते, केचित् प्रसादभाजः, केचिद् बध्यन्ते, तथा प्रकृतिरेका पुरुषाश्च बहवो भृत्या इवेति। येषां स्पष्टं विवेकज्ञानं तेषां शीघ्रम् येषामुपासनामात्रं तेषां क्रमेण, अन्येषान्तु नास्त्येव ॥ ८ ॥

कूटस्थत्वादात्मनो बन्धो नास्त्येव, इत्यत्राह—

**प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥५॥**

प्रकृतिः यं प्रत्यात्मानं विवेकेन दर्शितवती, तं प्रति प्रकृतेरप्रवर्त्तनं मोक्षः; यं प्रति प्रवर्त्तते, तं प्रति पुरुषच्छायापत्तिरेवाध्यासः, स न तात्त्विकः। तथा च—

"यद्यात्मा मलिनोऽस्वच्छो[1] विकारी स्यात्स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥"

( कूर्म० २।२।१२–१३ ) ॥५॥

अत्र प्रमाणं दर्शयति—

**कार्यतस्तत्सिद्धिः ॥६॥**

प्रकृतिकार्याणां महदादीनां अविच्छेददर्शनात् प्रकृतेर्बन्धकत्वसिद्धिः ॥ ६ ॥

---

१. मलिनः सृष्टः इति मुद्रितपुराणे पाठः।

प्रकृतेः प्रवृत्तिस्वभावत्वात् सर्वपुरुषान् प्रवर्त्तयेत्, किं विवेकाविवेकदर्शनेनेत्याह—

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥७॥

यथा कण्टकं दृष्ट्वा कश्चित् कश्चिन्निषेधति 'अनेन वर्त्मना मा गाः', न सर्वान् प्रति, तथाधिकाराच्चेतनविशेषोद्देशात् प्रवर्तनं न सर्वान् प्रतीति नियमः ॥ ७ ॥

नात्मनो बन्ध इत्युक्तम्, तत्राह—

अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥८॥

प्रवर्त्तकत्वमेव प्रकृतेर्बन्धनाय; अतः प्रकृतियोगेऽपि तच्छायापत्त्या पुरुषस्य बन्धाभिमानसिद्धिः, नाञ्जस्येन न तत्त्वतः। अयोदाहवदिति, यथा तप्तलौहयोगात् लौहो दहतीति मन्यते, न च लौहस्य दाहकत्वम्, किन्तु संयोगादग्नेरेव तदिति ॥ ८ ॥

किमर्थं सृष्टिरित्यत्राह—

रागविरागयोर्योगः सृष्टिः ॥९॥

रागाद् भुक्तिः, वैराग्यान्मुक्तिः। परमार्थतस्तु रागादपि भोगे विषयदोषदर्शनाद्वैराग्यमेवेति ॥ ९ ॥

प्रथमाध्याये 'सत्त्वरजस्तमः' इत्यादिसूत्रे ( १।६१ ) पञ्चविंशतितत्त्वमुक्तम्; इदानीं तेषां सप्रपञ्चं क्रममाह—

महदादिक्रमेण पञ्चभूतानाम् ॥१०॥

सृष्टिरित्यनुवर्त्तते। क्रमञ्च वक्ष्यति ॥ १० ॥

तत् किं स्वार्थं परार्थं वेत्यत आह—

आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ॥११॥

आत्मार्थत्वात् पुरुषार्थत्वात् सृष्टेर्नैषां महदादीनामात्मार्थे स्वार्थे आरम्भः। नित्यत्वात् प्रकृतेः स्वार्थारम्भो युक्तः, महदादीनान्तु कारणलयेन नाशात् सृष्टिमात्रमिति ॥ ११ ॥

दिक्कालौ सिद्धौ, तौ कथं गणनायां न श्रुतौ इत्याह—

दिक्कालावाकाशादिभ्यः ॥१२॥

तत्तदुपाधिभेदादाकाशमेव दिक्कालशब्दवाच्यम्; तस्मादाकाशेऽन्तर्भूतौ। आदिशब्दश्च संपातायातः, सप्तम्यर्थे पञ्चमी ॥ १२ ॥

महतो बुद्धेर्लक्षणमाह—

अध्यवसायो बुद्धिः ॥१३॥

एवमेवेति निश्चयोऽध्यवसायः ॥ १३ ॥

धर्मादीनां क्वान्तर्भाव इत्यत्राह—

तत्कार्यं धर्मादिः ॥१४॥

धर्मज्ञानवैराग्यैश्वर्य्याणि, तत्कार्यत्वेनात्मधर्मत्वं तेषां निरस्तम्। कार्यकारणयोरभेदादन्तर्भावो दर्शितः ॥ १४ ॥

तस्य विशेषमाह—

महदुपरागाद्विपरीतम् ॥१५॥

विपरीतमिति—अधर्माज्ञानावैराग्यानैश्वर्याणि। दृष्टो हि सहकारिभेदात् कार्यभेदः, यथा वेत्रवीजस्य वेत्राङ्कुरजनकत्वं

वह्निसंयोगसहकारिणः कदलीकाण्डजनकत्वम्, तथा सत्त्वसहकारिणो महतो धर्मादिजनकत्वम्, तमः सहकारिणोऽधर्मादिजनकत्वमिति ॥ १५ ॥

क्रमप्राप्तमहङ्कारादिलक्षणमाह—

अभिमानोऽहङ्कारः ॥१६॥

अहमिति अभिमानः ॥ १६ ॥

तस्य कार्यमाह—

एकादश पञ्चतन्मात्रं तत्कार्यम् ॥१७॥

एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति षोडशकं तत्कार्यम् ॥ १७ ॥

कथमेकस्मात् कारणाज्जडप्रकाशौ भवत इत्यत्राह—

सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥१८॥

महद्विकारादहङ्कारात् सात्त्विकं सत्त्वसहकृतमेकादशकम् एकादशेन्द्रियं प्रवर्त्तते, तमःसहकृतं तन्मात्रम् ॥ १८ ॥

इन्द्रियत्रैविध्यमाह—

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥१९॥

कर्मेन्द्रियैर्वागादिभिः पञ्चभिर्बुद्धीन्द्रियैर्घ्राणादिभिः पञ्चभिः सहान्तरं मन इत्येकादशकमिन्द्रियम् ॥ १९ ॥

भौतिकानीन्द्रियाणीति तत्प्रतिषेधार्थमाह—

आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥२०॥

तत्र श्रुतिबाधादित्यर्थः ॥ २० ॥

युक्त्यन्तरमाह—

देवतालयश्रुतेर्नारम्भकस्य ॥२१॥

कारणे कार्यलय इति स्थितम् । "आदित्यं वै चक्षुर्गच्छति[1]" इति देवे लयः श्रूयते । तस्मान्नारम्भकस्य नारम्भकाभिमतस्य भूतस्य कारणत्वमिति ॥ २१ ॥

नित्यानीन्द्रियाणीति केचित्, तत्परिहारार्थमाह—

तदुत्पत्तिः श्रूयते, विनाशदर्शनाच्च ॥२२॥

अहङ्कारात्तदुत्पत्तिः श्रूयते । उत्पन्नस्य विनाशोऽप्यवश्यं भाव ति ॥२२॥

चक्षुरादीनां शक्तिभेददर्शनादैन्द्रियकानीन्द्रियाणीति, तन्निषेधति—

अतीन्द्रियमिन्द्रियं, भ्रान्तानामधिष्ठाने ॥२३॥

भ्रान्तानामधिष्ठाने चक्षुर्गोलकादाविन्द्रियज्ञानम् । अन्यथा छिन्नकर्णस्य श्रवणानुपपत्तिः उत्पाटितचक्षुषो[2] रूपग्रहण-प्रसङ्गश्चेति ॥२३॥

एकमिन्द्रियम्, उपाधिभेदान्नानात्वमित्यत्राह—

शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥२४॥

---

१. अत्र सूर्यो मे चक्षुषि श्रितः ( तै० ब्रा० ३।१०।८।५ ), सूर्यो वै प्रजानां चक्षुः (शतपथ १३।३।८।४), तद् यच् चक्षुरादित्यः सः (जै०उप० १।२८।७) इत्येताः श्रुतयोऽनुसन्धेयाः ।

२. पाटलचक्षुषः ( पाठा० ) ।

भवतूपाधिभेदः, शक्तिभेदस्त्ववश्यं वक्तव्यः, स च सत्यः, इति नानात्वमपि सत्यम् ॥२४॥

एकत्वेनैवोपपत्तौ बहुत्वकल्पना गुर्वीत्यत्राह—

न कल्पनाविरोधः प्रमाणदृष्टस्य ॥२५॥

स्पष्टम् ॥ २५ ॥

मनसो लक्षणमाह—

उभयात्मकं मनः ॥२६॥

बुद्धीन्द्रियात्मकं कर्मेन्द्रियात्मकञ्चेत्यर्थः; मनोऽधिष्ठानादुभयप्रवृत्तेः ॥ २६ ॥

कथमेकस्मादहङ्कारादनेकानीन्द्रियाणीत्यत आह—

गुणपरिणामभेदान्नानात्वमवस्थावत् ॥२७॥

धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदादनेकानि तानि। अवस्थावदिति, यथैकस्य देहस्य बाल्ययौवनवार्द्धक्यानीति ॥२७॥

उभयेन्द्रियविषयमाह—

रूपादिरसमलान्त उभयोः ॥२८॥

उभयोर्बुद्धीन्द्रियकर्मेन्द्रिययोः। बुद्धीन्द्रियस्य विषया रूपरसगन्धस्पर्शशब्दाः। कर्मेन्द्रियस्य विषया वचनविहरणादानानन्दरसमलाः। रसमलो नाम मलः, तदन्तः ॥२८॥

आत्मेन्द्रिययोर्वैधर्म्यमाह—

द्रष्टृत्वादिरात्मनः, करणत्वमिन्द्रियाणाम् ॥२९॥

व्यक्तम् ॥२६॥

अन्तःकरणत्रयाणामन्योन्यवैधर्म्यमाह—

त्रयाणां स्वालक्षण्यम् ॥३०॥

महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणम् । महतोऽध्यवसायः, अहङ्कारस्य अभिमानः, मनसः सङ्कल्प इति ॥३०॥

एषां साधर्म्यमाह—

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥३१॥

पञ्च प्राणाद्या वायवस्त्रिभिः करणैर्धार्यन्ते ॥३१॥

करणानां वृत्तीराह—

क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥३२॥

क्रमशः—यथा मन्दालोके चौरं दृष्ट्वा इन्द्रियेण वस्तु विचारयति, ततश्चौरोऽयमिति मनसा सङ्कल्पयति, ततोऽसौ धनं गृह्णातीति अहङ्कारेणाभिमन्यते, ततश्चौरं गृह्णामीति बुध्याऽध्यवस्यति । अक्रमश्च रात्रौ विद्युदालोके व्याघ्रं दृष्ट्वा झटिति अपसरति; तत्र चतुर्णामेकदा वृत्तिः । यद्यपि वृत्तीनामेकदाऽसम्भवात्तत्रापि क्रम एव, तथाप्युत्पलशतपत्रव्यतिभेदवदवभासनादक्रम इत्युक्तमिति ॥३२॥

कति वृत्तयस्तत्राह—

वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च ॥३३॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । प्रत्यक्षानुमानशब्दाः प्रमाणानि । विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् । विकल्प

उभयस्पृग् ज्ञानम् । निद्रा तमोऽवलम्बि ज्ञानम् । स्मृतिरतीत-ज्ञानम् । क्लिष्टाः क्लेशयुक्ता रजस्तमोमय्यः । अक्लिष्टाः सत्त्व-मय्यो दग्धक्लेशाः[1] ॥३३॥

वृत्तिनिवृत्तौ मुक्तिरित्याह—

तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥३४॥

वृत्तिनिवृत्तौ क्षयिताविद्यास्मितारागद्वेषाभिनिवेशः स्वस्थः स्वरूपं लभत इत्यर्थः ॥३४॥

दृष्टान्तमाह—

कुसुमवच्च मणिः ॥३५॥

यथा जपाकुसुमसंसर्गात् स्फटिके लौहित्यम्, तदपगमात् स्फटिकः स्वरूपेणावतिष्ठते, तथा सोऽपीति ॥३५॥

करणानां तुल्यत्वात् सर्वदा तुल्यरूपता स्यादित्यत्राह—

पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥३६॥

न तुल्यता करणोद्भवानुद्भवाभ्यां विशेषात्, विशेषश्चादृष्टो-ल्लासात् बलवत्तरत्वात् ॥३६॥

दृष्टान्तमाह—

धेनुवद्वत्साय ॥३७॥

यथा धेनुत्वेन तुल्यत्वेऽपि या क्षीरिणी, सा वत्सं पुष्णाति, तथेति ॥३७॥

---

१. एतत्सूत्रवृत्तिविषयेऽस्मत्संपादितं सभाष्यं योगसूत्रं ( १।५–११ ) द्रष्टव्यम् ।

बाह्यान्तरभेदात् करणानीत्यत्राह—

करणं त्रयोदशविधमवान्तरभेदात् ॥३८॥

अवान्तराणि बुद्ध्यहङ्कारमनांसि । बाह्यानि दश चक्षुरादीनीन्द्रियाणि ॥३८॥

इन्द्रियेषु कथं करणत्वमित्यत्राह—

इन्द्रियेषु साधकतमत्वयोगात् कुठारवत् ॥३९॥

यथा साधकतमत्वेन कुठारे करणत्वम्, तथेन्द्रियेष्वपि इति ॥३९॥

त्रयोदशकरणानां कार्यमाह—

द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥४०॥

द्वयोर्बुद्धीन्द्रिय-कर्मेन्द्रिययोः प्रधानं मनः, तदधिष्ठानादेवैषां प्रवृत्तेः । यथा लोके भृत्येषु स्वामीति ॥४०॥

युक्तिमाह—

अव्यभिचारात् ॥४१॥

व्यक्तम् ॥४१॥

युक्त्यन्तरमाह—

तथाशेषसंस्काराधारत्वात् ॥४२॥

नष्टेन्द्रियाणामपि संस्कारदर्शनादिति ॥४२॥

न्यायमाह—

स्मृत्यानुमानाच्च ॥४३॥

इन्द्रियं विनाऽपि स्मृतिदर्शनान्मनोऽनुमीयते ॥४३॥

आत्माधारः संस्कार इत्यत्राह—

सम्भवेन्न स्वतः ॥४४॥

स्वत आत्मनो न सम्भवेत्, कूटस्थनिर्गुणत्वादिति ॥४४॥

करणत्वे तुल्ये किंनिबन्धनो गुणप्रधानभाव इत्यत्राह—

आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥४५॥

स्पष्टम् ॥४५॥

निरभिसन्धानान्नापरः परार्थं प्रवर्त्तते इत्यत्राह—

तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ॥४६॥

बुद्धिप्रतिबिम्बितपुरुषकर्मार्जितत्वात् पुरुषार्थमभिचेष्टा प्रवर्त्तनं बुद्ध्यादीनाम्। यथा लोके येन अर्जितः भृत्यः तत्कर्म करोति ॥४६॥

सर्वत्र बुद्धेः प्राधान्यमित्याह—

समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥४७॥

यथा लोके ग्रामाध्यक्षाद् राज्याध्यक्षः[1] श्रेष्ठः, तस्मादपि राजेति, तथा मनो बुद्ध्यर्थं प्रवर्त्तते, इति सर्वप्रधाना बुद्धिरिति। समानकर्मयोगे पुरुषार्थतुल्यक्रियायोगेऽपि सर्वेषामिति। लोकवदिति वीप्साऽध्यायसमाप्तौ ॥४७॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
प्रधानकार्याध्यायो द्वितीयः ॥

---

१. द्रव्याध्यक्षः ( पाठा० )

# तृतीयो वैराग्याध्यायः

प्रधानकार्यविरूपणानन्तरं वैराग्यार्थं तृतीयाध्ययारम्भः—

**अविशेषाद्विशेषारम्भः ॥ १ ॥**

अविशेषाद् भूतसूक्ष्माद्विशेषस्य महाभूतस्यारम्भः ॥१॥

**तस्माच्छरीरस्य ॥ २॥**

तस्य मांसादिमयविचारान्निर्विद्यते ॥२॥

उत्पत्तिर्दर्शिता, नाशः कुतः ? इत्यत आह—

**तद्बीजात् संसृतिः ॥ ३ ॥**

तस्य भूतारम्भस्य कारणाद् धर्मात् संसरणं नाशः ॥३॥

भूतानामारम्भकस्वभावत्वे[1] सर्वदारम्भादनिर्मोक्षइत्यत्राह-

**[2]अविवेकाच्च प्रवर्त्तनमविशेषाणाम् ॥ ४ ॥**

विवेकज्ञानपर्य्यन्तम् आरम्भकस्वभावत्वम् भूततन्मात्राणामिति ॥४॥

अविवेकिनं प्रत्यारम्भकत्वे महाप्रलयेऽपि तं प्रत्यारम्भकत्वं स्यादित्याह -

**उपभोगादितरस्य ॥ ५ ॥**

अविवेकिन उपभोगात् महाप्रलये शरीराभावात् कुत उपभोगः इति न तं प्रत्यारम्भकत्वम् ॥५॥

---

१. आरम्भकस्य भावत्वे (पाठा०) ।

२. अविवेकात् (पाठा०) ।

अनारम्भकत्वे तु कुतो विशेषादविवेकिनं प्रति पुनरारम्भकत्वमित्यत्राह—

**सम्प्रति परिष्वक्तो[1] द्वाभ्याम् ॥ ६ ॥**

सम्प्रति संसृतिकाले द्वाभ्यां[2] धर्माधर्माभ्यां परिष्वक्तः गमागमपरिष्वङ्गी, प्रलयेऽपि धर्माधर्मानुबद्ध आत्मेति तं प्रति पुनरारम्भः, मुक्तौ न तथेति ॥ ६ ॥

नित्यत्वे तु मुक्तेः कथं पारतन्त्र्यम् इत्यत्राह—

**मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥७॥**

प्रायश इति दृश्यत्वात्। इतरत् सूक्ष्मशरीरं न तथा, दुरूहत्वात् ॥७॥

द्वयोर्देहयोः कस्य भोग इत्यत्राह—

**पूर्वोत्पत्तेस्तत्कार्य्यत्वं भोगादेकस्य नेतरस्य ॥८॥**

पूर्वोत्पत्तेः प्रथमोत्पत्तेः[3] सूक्ष्मशरीरस्य भोगादेकस्य तस्य, नेतरस्य स्थूलस्य तत्कार्य्यत्वं, स्थूलशरीरस्य [4]तु गौणो भोगः मृतशरीरे भोगादर्शनात् ॥८॥

कतिभिस्तत्त्वैः सूक्ष्मशरीरारम्भ इत्यत्राह—

**सप्तदशैकं लिङ्गम् ॥९॥**

सप्तदश च एकं च अष्टादश, तैर्लिङ्गं सूक्ष्मदेह उत्पद्यते। बुद्ध्यहङ्कारमनांसि पञ्च सूक्ष्मभूतानि दशेन्द्रियाणि चेति ॥९॥

---

१. परिमुक्त इत्यन्येषां पाठः ।

२. संप्रतिकाले द्वाभ्यामिति क्वचिन्न ।

३. प्रथमोत्पत्तेरिति क्वचिन्न ।

४. 'तु' न सर्वत्रपठ्यते ।

सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात् कथं पुत्तिकाहस्तिदेहानां विसदृशानां तस्मादुत्पत्तिरित्यत्राह—

**व्यक्तिभेदः कर्मविशेषात् ॥१०॥**

व्यक्तम् ॥१०॥

यद्यात्मा अन्यः, कथं देहेऽहमित्यभिमान इत्यत्राह—

**तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ॥११॥**

आत्माधिष्ठानाश्रये देहे [1]भोगादात्मवादाद् देहे अहमित्यभिमानवादः ॥११॥

अत्र दृष्टान्तान्तरमाह—

**न स्वातन्त्र्यात्तदृते छायावच्चित्रवच्च ॥१२॥**

यद्यात्मना विना देहेऽहमिति प्रत्ययः, तदा मृतदेहेऽहमिति प्रत्ययः स्यात् ? न चैवम् ; यथा आवरकेण विना न छाया, भित्तिं विना न चित्रम्, तथात्रापीति ॥१२॥

सूक्ष्मदेह एवात्मा भविष्यतीत्यत्राह—

**मूर्त्तत्वेऽपि न संघातयोगात्तरणिवत् ॥१३॥**

सङ्घातत्वान्मूर्तः, मूर्तत्वात् परार्थः। तरणिवदिति, यथा प्रकाशत्वेऽपि मूर्त्तत्वान्नादित्यस्यात्मत्वम् ॥१३॥

मन आत्मा भविष्यतीत्यत्राह—

**अणुपरिमाणं [2]तत्कृतिश्रुतेः ॥१४॥**

मनोऽणुपरिमाणं, तत्क्रियायां श्रुतिदर्शनात्। अथ व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः ; यदि

---

१. संभोगात् ( पाठः )।

२. तद्गतिश्रुतेरिति केचन पठन्ति।

कर्णशष्कुलीवन्नियतावयवस्योपाधित्वम्, तदा तावन्मात्रे वृत्तिलाभो नान्यत्रेति श्रोत्रवत् प्रसज्येत। ततश्च देहमात्रमुपाधिर्वक्तव्यः। तथा च तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना', 'पादे में सुखम्' इत्यव्याप्यवृत्तित्वप्रतीतिविरोधः। युगपज्ज्ञानानुत्पत्तिरपि मनसोऽणुत्वम्[1]। न्यायश्चान्यत्र प्रपञ्चित इति ॥१४॥

हेत्वन्तरमाह—

**तदन्नमयत्वश्रुतेः[2] ॥१५॥**

तस्य मनसोऽन्नमयत्वे श्रुतिरस्ति। अन्नमयत्वेन च सोम्यत्वं दर्शितम्। सोम्यत्वञ्च चन्द्ररूपत्वमिति। न चात्मा चन्द्रः[3]। श्रुतिश्च "अन्नं वै प्राणाः" प्राणश्च चन्द्रमयो ज्ञेयः। "चन्द्रमा मनसो जातः" इति (ऋग् १०।९०।१३)। तस्मादणु मनो नात्मेति ॥१५॥

पुरुषार्थं महदादीनां प्रवृत्तिः संसृतिः किमर्थमित्यत्राह—

**पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः[4] ॥१६॥**

यथा प्रवृत्तिस्तथा संसृतिः, संसृतौ च मरणदुःखमिति निर्विण्णो भवति। सूपकारवदिति परार्थमेव प्रवृत्तिः ॥१६॥

विप्रतिपत्तौ सत्यां स्वपक्षमाह—

---

१. अनुत्पत्तेरपि मनसोऽणुत्वमाह; अनुत्पत्तिरपि (पाठा०)।

२. 'अन्नमयं हि सोम्य मनः' इति श्रुतिः (छान्दोग्य ६।५।४)।

३. वाक्यमिदं सर्वत्र न दृश्यते।

४. सूपकारवद् वा (पाठा०)।

पाञ्चभौतिको देहः ॥१७॥

स्पष्टम् ॥१७॥

का विप्रतिपत्तिरित्यत्राह—

चातुर्भौतिकमित्यन्ये[1] ॥१८॥

आकाशपरित्यागेन चातुर्भौतिकशरीरमित्यन्ये ॥१८॥

मतान्तरमाह—

ऐकभौतिकमित्यपरे[2] ॥१९॥

पार्थिवं शरीरमिति ॥१९॥

देहचैतन्यं निरस्यति—

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥२०॥

भूतेषु[3] पृथक्कृतेषु चैतन्यादर्शनान्न भौतिकस्य देहस्य[4] स्वभावचैतन्यम्; अतएव मिलितानाञ्च चैतन्यं नाशङ्कनीयम्। जन्तवो हि प्रत्येकं क्षुद्रजन्तुसंयमनशक्तिमन्तः, मिलितास्ते हस्तिनमपि संयमयन्ति, न चैवं भूतानीति न देहचैतन्यम् ॥२०॥

दूषणान्तरमाह—

[5]प्रपञ्चमरणाद्यभावश्च ॥२१॥

---

१. इत्येके–इत्यन्ये पठन्ति।

२. इतीति क्वचिन्न।

३. पृथक् पृथक्कृतेषु चैतन्यादर्शनात् (पाठा०)।

४, भौतिकस्य देहस्येति क्वचिन्न।

५. प्रपञ्चाद्यभावश्च (पाठा०), प्रपञ्चत्वाद्यभावश्चेत्यन्ये।

देहस्य चेतनत्वे प्रपञ्चस्य सर्वस्य मरणादेरभाव[1]:, चेतनस्य नित्यत्वात्। आदिशब्दात्[2] सुप्तिमूर्च्छयोर्ग्रहणम्। अथ चेतनस्यापि मरणं मुक्तिरिति ॥२१॥

दूषणान्तरमाह—

**मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे[3] सौक्ष्म्यात् सांहत्ये तदुद्भवः ॥२२॥**

यथा मदशक्तिः, प्रतिपुरुषे सूक्ष्मत्वेन दृष्टा, सांहत्ये महच्छक्त्युद्भवाद् बृहच्छिलामपि वहन्ति, न च भूतेष्वपि प्रत्येकं सूक्ष्मं चैतन्यं दृष्टं येन सांहत्ये देहे[4] चैतन्यं स्यात्[4]। न सांसिद्धिकमिति सूत्रे (३।२०) निषिद्धं निषेधमुखेन प्रदर्शितं भवति। इह तु सूत्रे विधिमुखेनेति न पुनरुक्तम् ॥२२॥

वैराग्यादीनां पारम्पर्येण मुक्तिसाधनत्वमुक्तम्, इदानीं साक्षान्मुक्तिसाधनमाह—

**ज्ञानान्मुक्तिः ॥२३॥**

व्यक्तम् ॥२३॥

व्यतिरेकमाह—

**बन्धो विपर्ययात् ॥२४॥**

विपर्ययाद् अज्ञानात् ॥२४॥

---

१. प्रपञ्चत्वस्य मरणस्याभावः ( पाठा० )।

२. आदिशब्दादित्यादिकं वाक्यं क्वचिन्न पठ्यते।

३. सौक्ष्म्यादिति विज्ञानभाष्ये नास्ति।

४.-४. देहचैतन्यं स्यात् ( पाठा० )।

न ज्ञानमात्रान्मुक्तिः, कर्मणोऽपि मुक्तिसाधनत्वात्। तथा च श्रुतिः--"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति (बृहदा० ४।४।२) अत्राह—

**नियतकारणत्वान्न समुच्चय-विकल्पौ ॥२५॥**

नियतमेव कारणं ज्ञानान्मुक्तिः, कर्मणो भुक्तिरिति। यत्राप्यकामकर्मणः समुच्चयः श्रूयते, तत्रापि ज्ञानार्थम्। तस्मान्न समुच्चयः। नापि कदाचिज् ज्ञानात् कदाचित् कर्मण इति विकल्पः। श्रुतिश्च--"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (यजुः, माध्यन्दिन०।३१।१८) ॥२५॥

दूषणान्तरमाह—

**स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥२६॥**

मायिकः स्वप्नः, अमायिको जागरः। स्वप्नवत् कर्म, जागरवज्ज्ञानम्। तुल्यकालयोर्हि समुच्चयः, न तु स्वप्नजागरयोस्तुल्यकालत्वम्। तस्मान्न ज्ञानकर्मसमुच्चय इति ॥२६॥

प्रत्ययत्वात्स्वप्नप्रत्ययवज्जाग्रत्प्रत्ययस्यापि मिथ्यात्वमित्यत्राह—

**इतरस्यापि नात्यन्तिकम् ॥२७॥**

स्वप्नप्रत्ययस्यापि नात्यन्तिकं मिथ्यात्वम्, स्वपुरुषवत्। न वा[1] स्वात्मन्यपि मिथ्यात्वम्, अन्यथा स्वप्न इत्येव न स्यात्। न चात्यन्तादृष्टे स्वप्नः, किन्तु जाग्रद्दृष्टेऽर्थे ॥२७॥

---

१. न च (पाठा०)।

दृष्टकारणस्याभावात् सङ्कल्पमात्रेण योगिनां न सर्वसिद्धि-रित्यत्राह—

संकल्पितेऽप्येवम् ॥२८॥

नास्मदादीनां सङ्कल्पात् सिद्धिरिति योगजधर्मोपगृहीतानां सिद्धानामपि न भवितव्यं तस्मान्न मिथ्येति ॥२८॥

[1]एतदेवाह—

भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥२९॥

यथा महदादीनां पूर्वमपेक्ष्य कार्यंकरणम्, प्रकृतेस्तु न कार्यकरणे कस्याप्यपेक्षा, तथा दृष्टकारणाभावादपि योगिनां भावनोपचयात् सर्वं संपद्यते इत्यर्थः ॥२९॥

भावनार्थं ध्यानमाह—

[2]रागापहतिर्ध्यानम् ॥३०॥

रागाद्रजोगुणाच्चलितत्वम्, तदपहतिर्निश्चलितत्वं ध्यानम् ॥३०॥

तत्सिद्धिः कथमित्यत आह—

वृत्तिनिरोधात्तत्सिद्धिः ॥३१॥

वृत्तयः प्रमाणादयः पञ्च, तन्निरोधात् तत्सिद्धिः ध्यानसिद्धिः ॥३१॥

तन्निरोधः कथमित्यत आह—

धारणासनस्वकर्मणा तत्सिद्धिः ॥३२॥

---

१. एतदेवाह ( पाठा० ) ।

२. रागोपहतिरित्यन्येषां पाठः ।

धारणा नाभ्यादिदेशे चित्तधारणम् । आसनं स्वस्तिकादि । अनेन यमनियमप्राणायामप्रत्याहारा उपलक्षिताः । स्वकर्म स्वजातिविहितकर्मानुष्ठानम् इति वृत्तिनिरोधसिद्धिः ॥३२॥

नानासनेषु स्वमतमासनमाह—

**स्थिरसुखमासनम् ॥३३॥**

येन स्थैर्यं सुखं च स्यात्, तदासनमनुष्ठेयम् ॥३३॥

अन्यं निरोधोपायमाह—

**निरोधश्छर्दिविधारणाभ्याम् ॥४३॥**

छर्दिः रेचकम्, विधारणं कुम्भकम् । उपलक्षणमेतत्, तेन पूरकोऽपि द्रष्टव्यः ॥३४॥

किं तत् स्वकर्मेत्यत आह—

**स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥३५॥**

स्पष्टम् ॥३५॥

अन्यं वृत्तिनिरोधोपायमाह—

**वैराग्यादभ्यासाच्च ॥२६॥**

वैराग्याद्विविधात्, अपराद् अलमिति प्रत्ययात्, पराज् ज्ञानप्रसादमात्रात् । अभ्यासात् पौनःपुन्येन ध्यानात् । चः समुच्चये ॥३६॥

वृत्तीनामवान्तरभेदमाह—

**विपर्ययभेदाः पञ्च ॥३७॥**

अविद्या मिथ्याज्ञानम्, अस्मिता अभिमानः, रागोऽनुरागः, द्वेषः क्रोधः, अभिनिवेशस्त्रास इति, विषयेण विषयि ज्ञानमुपलक्षितम् ॥३७॥

अशक्तिमाह—

अशक्तिरष्टाविंशतिधा ॥३८॥

तुष्टिमाह—

तुष्टिर्नवधा ॥३९॥

सिद्धिमाह—

सिद्धिरष्टधा ॥४०॥

चतुर्षु विपर्ययभेदमाह—

अवान्तरभेदाः पूर्ववत् ॥४१॥

पूर्ववदिति पूर्वाचार्य्यैरुक्ताः - द्वाषष्टिर्विपर्ययभेदाः । प्रकृति-महदहङ्कार-पञ्चतन्मात्रेष्वात्मबुद्धिरविद्या—तमः, अष्टविषयत्वादष्टधा । देवा ह्यणिमादिकमात्मीयत्वेनाभिमन्यन्ते; सेयमस्मिता--मोहः, अष्टविषयत्वादष्टधा । शब्दादिषु तन्मात्रेषु पञ्चसु दिव्यादिव्यतया रागः –महामोहः, दशविषयत्वादशधा । शब्दादयो दश अणिमाद्यष्टैश्वर्योपधानेन सहिताः । ते चान्येनोपहन्यमाना इति द्वेषः--तामिस्रः, अष्टादशविषयत्वाद् अष्टादशधा । देवा ह्येतानुपभुञ्जाना असुरैरुपहन्यन्त इत्यभिनिवेशः त्रासः--अन्धतामिस्रः, अष्टादशविषयत्वादष्टादशधा । एवं द्वाषष्टिरिति ॥४१॥

अशक्तिभेदानाह—

एवमितरस्याः ॥४२॥

इतरस्याः अशक्तेः एवमनेकधाऽष्टाविंशतिधा । एकादशेन्द्रियवधाः—

"बाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्य-पङ्गुत्वे क्लैब्योदावर्तमुग्धताः" ॥

एतद्विषया एकादश बुद्धेः । नव तुष्टयः, अष्टौ सिद्धयः तद्विपर्ययेण सप्तदश बुद्धेः । एवमष्टाविंशतिरिति ॥४२॥

तुष्टिभेदानाह—

**आध्यात्मिक्यादिभेदान्नवधा तुष्टिः ॥४३॥**

अनात्मन्यात्मबुद्ध्या प्रवर्तमाना आध्यात्मिक्यश्चतस्रः[1] । आदिशब्दाद् बाह्याः पञ्च । प्रकृतिविवेकदर्शनाच्चेन्मुक्तिः, सैवोपास्या : किमात्मनेति प्रकृत्याख्या एका तुष्टिः अम्भ इत्युच्यते । विवेकज्ञानादपि न साक्षात्, अदर्शनं[2] व्रतग्रहणादेव भविष्यतीत्युपादानाख्या द्वितीया तुष्टिः सलिलमित्युच्यते। व्रतादपि न साक्षात्, किन्तु कालाद् भवतीति कालाख्या तृतीया तुष्टिरोघ इत्युच्यते । कालवशादपि न सर्वेषां मुक्तिः, किन्तु भाग्यादेवेति भाग्याख्या चतुर्थी तुष्टिर्वृष्टिरित्युच्यते । आत्मानमधिकृत्येत्याध्यात्मिक्यः[3]। पञ्चधा विषयोपरमाद् बाह्याः पञ्च। तथा हि--विषयार्जनदुःखादुपरमे एका तुष्टिः पारमुच्यते । रक्षणदुःखादुपरमे द्वितीया तुष्टिः सुपारमुच्यते । क्षयं भावयतो दुःखादुपरमे तृतीया तुष्टिः पारपारमुच्यते । भोगदोषं भावयतो दुःखादुपरमे चतुर्थी तुष्टिरनुत्तमाम्भ उच्यते । नानुपहत्य भूतानि भोगसिद्धिरिति दुःखादुपरमे पञ्चमी तुष्टिरुत्तमाम्भ उच्यते । एवं नवधा ॥४३॥

सिद्धिभेदानाह—

---

१. आध्यात्मिकाः ( पाठा० ) ।
२. साक्षाद्दर्शनात् ( पाठा० ) । अदर्शनात् ( पाठा० ) ।
३. आध्यात्मिकाः ( पाठा० ) ।

## ऊहादिभिः सिद्धिरष्टधा ॥४४॥

ऊहस्तर्को मननमित्येका सिद्धिस्तारमुच्यते। शब्दज्ञानं द्वितीया सिद्धिः सुतारमुच्यते। अध्ययनं तृतीया सिद्धिः तारतारमुच्यते। गुरुब्रह्मचारिणां प्राप्तिश्चतुर्थी सिद्धिः रम्यकमुच्यते। बाह्यान्तःशुद्धिः पञ्चमी सिद्धिः सदामुदितमुच्यते। आध्यात्मिकदुःखविघातः षष्ठी सिद्धिः प्रमोदमुच्यते। आधिभौतिकदुःखविघातः सप्तमी सिद्धिर्मुदितमुच्यते। आधिदैविकदुःखविघातोऽष्टमी सिद्धिर्मोदमानमुच्यते। एवमष्टधेति। प्राधान्येन विपर्ययाशक्तितुष्टिसिद्धिरिति चतुष्प्रकारा; अवान्तरभेदात् पञ्चाशत् ॥४०॥

उत्तरेण पूर्वपरित्यागात् सिद्धिरित्याह—

## नेतरादितरहानेन विना ॥४५॥

इतरादशक्तितः इतरहानेन विपर्ययहानेन विना न सिद्धिः। एवं तुष्टितोऽशक्तिहानेन विना न सिद्धिः। एवं तद्धानेन विनेति ॥४५॥

सर्गे सति वैराग्यं तत्र कति सर्गभेदा इत्यत्राह—

## दैवादिप्रभेदाः[1] ॥४६॥

आदिशब्दात् षड् भेदाः। तथा चोक्तम्—"दैवादिः[2] षड्विधश्च स्यात् संसारः कर्मसम्भवः। सुरोऽसुरो नरः प्रेतो नारकस्तिर्यकस्तथा।" स्थावरादीनां नारकेष्वन्तर्भावः ॥४६॥

प्रकृतेः प्रवृत्तिशीलत्वात् सर्वदा सृष्टौ न मुक्तिरित्यत्राह—

## आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥४७॥

---

१. प्रभेदेति भिक्षुः।

२. दैवादौ षड् ( पाठा० )।

तत्कृते पुरुषकृते मोक्षार्थं सृष्टिः। आविवेकाद् विवेकपर्यन्तम्। प्रकृतेः शीलमिदं यद् विवेकज्ञानं यावत् प्रवर्तते, स्वभावस्यानपायित्वात् ॥४७॥

कुत्र कथं सृष्टिरित्यत्राह—

**ऊर्ध्वं[1] सत्त्वविशाला ॥४८॥**

ऊर्ध्वं देवलोके ॥४८॥

नागलोके सृष्टिमाह—

**तमोविशाला मूलतः ॥४९॥**

मूलतः मूले[2] पाताले ॥४९॥

मर्त्यलोके सृष्टिमाह—

**मध्ये रजोविशाला ॥५०॥**

मध्ये[3] मर्त्यलोके। विशाला उद्रिक्ता ॥५०॥

नन्वेकैकस्त्रगुणानामन्योऽन्यमिथुनीभावात्[4] कथं प्रकृतेः सृष्टिवैचित्र्यमित्यत आह—

**कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥५१॥**

यथा गर्भदासो विचक्षणो विचित्रं कर्म कुरुते प्रभोरर्थाय, तथा प्रधानं पुरुषार्थं विचित्रां सृष्टिं कुरुते कर्मवैचित्र्यात्[5] ॥५१॥

---

१. सत्यविशालेति प्रामादिकः पाठः।

२. मूलतः मूले इति क्वचिन्न पठ्यते।

३. मध्ये मर्त्यलोकेति क्वचिन्न।

४. मिथुनभावात् ( पाठा० )।

५. कर्मलाभाद् इत्यधिकं क्वचित्।

कर्मणा चेत् तल्लाभस्तर्हि[1] उत्तरोत्तरभूमिलाभात् कृतकृत्यस्य किं मोक्षेणेत्यत्राह—

**आवृत्तिस्तत्रापि, उत्तरोत्तरयोनियोगाद्धेयः ॥५२॥**

उत्तरोत्तरविशिष्टजन्मलाभेऽपि संसारे आवृत्तिः, तस्माद्धेयः संसारः ॥५२॥

एतदेवाह—

**समानं[2] जरामरणादिजं दुःखम् ॥५३॥**

आब्रह्मस्तम्बपर्यन्तम् ॥५३॥

कारणे प्रकृतौ लयादेव कृतकृत्यस्य किं मोक्षेणेत्यत आह—

**न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥५४॥**

भवेदेवम्, यदि प्रकृतिलीनस्य न पुनरावृत्तिः। न त्वेवम्, पुनरावृत्तिश्रुतेः। तथा च—"दश[3] मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥ बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रंन्तु तिष्ठन्त्यव्यक्तचिन्तकाः॥ निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते॥" यथा स्नानार्थं मग्नस्य पुनरुत्थानं तथा प्रकृतिलीनस्येत्यर्थः ॥५४॥

---

१, कर्म्मणा चेत्तल्लाभस्तर्हि—इति क्वचिन्न वर्त्यते।

२. सर्वत्रेति महादेवपाठः।

३. एते श्लोकाः 'तथा च वायुप्रोक्तम्' इत्युक्त्वा वाचस्पतिना तत्त्ववैशारद्यमुद्धृताः (१।१९) वायुपुराणनाम गृहीत्वाऽगृहीत्वा वा इमे श्लोका अन्यत्राप्युद्धृता दृश्यन्ते। बहुधान्विष्यमाणेऽपि वायौ। न इमे श्लोका उपलब्धाः।

नित्यत्वाद् यथा नात्मनो बन्धस्तथा प्रधानस्यापीत्यत आह—

**अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥५५॥**

अकार्यत्वमप्रयोजकम्, किन्तु परतन्त्रत्वम्। तच्च प्रकृतावस्तीति, तद्योगाच्च बन्धयोगः ॥५५॥

पर आत्मा किंरूप इत्यत्राह—

**स हि सर्ववित् सर्वकर्त्ता ॥५६॥**

प्रकृतिप्रतिविम्बितत्वादेवमभिमानः ॥५६॥

तात्त्विकमेव कर्तृत्वं भवतु, किं प्रतिबिम्बकल्पनया? तथा च न्यायाभिमत एवेश्वरोऽस्त्वित्यत्राह—

**ईदृशेश्वरसिद्धिः सिद्धा ॥५७॥**

[1]यद्यस्मदभिमत आत्मा ईश्वरो भवेत्, भवतु। न्यायाभिमते तु प्रमाणं नास्ति। एतच्च प्रथमाध्याये ईश्वरासिद्धेरिति सूत्रे (१।९२) वर्णितम् ॥५७॥

द्वितीयाध्याये "विमुक्तविमोक्षार्थम्" इतिसूत्रे (२।१) स्वार्थं परार्थञ्च प्रधानप्रवृत्तिरित्युक्तम्; अत्र तु स्वार्थस्य गौणत्वम् परार्थत्वमेवाह—

**प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥५८॥**

चेतनस्यापि परार्थं प्रवृत्तिर्दृश्यते, यथोष्ट्रः कुङ्कुमं वहति, अचेतनायास्तु प्रकृतेरभोक्तृत्वात् परार्थमेव प्रवर्तनमिति ॥५८॥

चेतनस्य प्रवृत्तिर्दृष्टा, नाचेतनास्येत्यत्राह—

---

१. यदस्मद—( पाठा० )।

**अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥५९॥**

यथा क्षीरमचेतनं वत्सार्थं प्रवर्तते, तथा प्रधानं पुरुषार्थं प्रवर्तते ॥५९॥

दृष्टान्तान्तरमाह—

**कर्मवद् दृष्टेर्वा कालादेः ॥६०॥**

यथा कृषीवलेन कृतं कर्म धान्यारोपणादि[1] कालादेव फलति ; न च वृक्षाश्चेतनाः । आदिशब्दाददृष्टं ग्राह्यम् ॥६०॥

उष्ट्रस्यापि ताडनादिभयाभिसन्धानात् प्रवृत्तिर्दृश्यते, न चाचेतनायाः प्रकृतेरभिसन्धानमस्तीत्यत्राह—

**स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ॥६१॥**

यथा गर्भदासो[2] भृत्यः स्वामिन्यभि संधानशून्यः स्वभावादेव चेष्टते,[3] अनभिसन्धाय कार्यं करोति, तथा प्रकृतिः ॥६१॥

पक्षान्तरमाह—

**कर्माकृष्टेर्वाप्यनादितः ॥६२॥**

अनादित्वात् संसारस्य धर्माधर्माकर्षणात् प्रधानं प्रवर्तते, यथा पुंसां कर्मवशादचेतना अपि वृक्षाः फलन्तीति ॥६२॥

युक्तिवहुत्वात् पुनर्वचनं न पुनरुक्ततादोषायेत्यत आह—

**विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥६३॥**

---

१. धान्यारोपादि ( पाठा० ) ।
२. गर्भभृत्यः ( पाठा० ) ।
३. चेष्टते, अनभिसन्धायेति क्वचिन्न ।

पुरुषार्थं सृष्टिः। तन्निवृत्तिः प्रकृतिपुरुषविवेकज्ञानात्, यथा सूपकारः पाकं कृत्वा निवर्तते ॥६३॥

उपदेशाद्विवेकज्ञानेऽपि मुक्तिर्न दृश्यते इत्यत्राह—

[1]इतर इतरज्जहाति तद्दोषात् ॥६४॥

न यथाकथञ्चिद् बोधमात्रान्मुक्तिः, किन्त्विन्द्रियाद् इतर आत्मा इतरत् प्रधानं जहाति ध्यानादिना पृथक् करोति, तद्दोषात् प्रकृतेश्चलत्वादिदोषात्[2] ॥६४॥

मोक्षस्वरूपमाह—

द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥६५॥

द्वयोः प्रकृतिपुरुषयोः। प्रकृतेरौदासीन्यं विवेकिनं प्रत्यप्रवर्तनम्, पुरुषस्यौदासीन्यं प्रकृत्यनभिस्वङ्गः। एकतरस्येति आत्मनः, तस्यैव मुख्यत्वात् ॥६५॥

प्रकृतेः प्रवृत्तिशीलाया औदासीन्ये सर्वमुक्तिप्रसङ्ग इत्यत्राह—

अन्यसृष्ट्युपरागेऽपि[3] न विरज्यते, प्रबुद्धरज्जु-तत्त्वस्येवोरगः[4] ॥६६॥

---

१. इतर इतरवत् तद् दोषादित्यन्येषां पाठः।

२. दोषदर्शनात् (पाठा०)।

३. अन्यसृष्ट्यु परागा न्नेत्यन्येषां पाठः।

४. तत्त्वस्यैवोरग इति भिक्षुपाठः।

न प्रवृत्तिशीलाया औदासीन्यं, स्वभावत्यागदोषात्; किन्तु विवेकिनं प्रति अप्रवर्तने अज्ञान् प्रति सृष्टत्यु परागेऽपि सृष्टि-करणेऽपि न विरुध्यते, सृष्टौ न निवर्त्तते। यथा रज्जौ सर्पभूते प्रबुद्धरज्जुतत्त्वकस्यैवोरगः सर्पभ्रमो निवर्त्तते न त्वज्ञातरज्जु-तत्त्वस्य ॥६६॥

अत्र न्यायमाह—

कर्मनिमित्तायोगाच्च[1] ॥६६॥

विवेकिनं प्रति कर्मणो निमित्तस्याभावात्। न बीजं विनाङ्कुरो भवति। श्रुतिरपि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्डक २।२।८)। अदृष्टस्य बुद्धिकार्यत्वादहङ्काराद्युत्पत्तौ भवत्वदृष्टसहायता, प्रकृतेः स्वकार्यकरणे कादृष्टसहकारिता? इत्यत्राह—

नैरपेक्ष्येऽपि[2] प्रकृत्युपकारेऽविवेको निमित्तम् ॥६८॥

अदृष्टनैरपेक्ष्येऽपि प्रकृतेरविवेकः सहकारीति ॥६८॥

प्रकृतेर्निवृत्तिं दृष्टान्तेनाह—

नर्त्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ॥६९॥

यथा नर्त्तकी परिषच्चारितार्थ्यान्नृत्यान्निवर्तते[3] तथा प्रकृतिरपि पुरुषस्य विवेकचारितार्थ्यात् सर्गान् निवर्तते ॥६९॥

---

१. अत्र कर्मनिमित्ता योगादिति गार्वेसंमतः पाठो न वृत्ति-स्वारस्यानुसारी।

२. नैरपेक्ष्ये इति भ्रष्टः पाठः।

३. नृत्यादिति क्वचिन्न।

निवृत्तापि प्रकृतिः कुतोऽपि कारणात् प्रवर्तिष्यत इत्यत आह—

**दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥७०॥**

स्वदोषविज्ञानाद्विवेकेन प्रकृतेर्नोपसर्पणम्, यथा कुलवधूः परपुरुषेण दृष्टा 'न पुनस्तद्दर्शनं मे भविष्यति' इत्यवधिं कुरुते ॥७०॥

यस्य बन्धस्तस्य मोक्षः, न च पुरुषस्य तौ स्त इत्यत आह—

**नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥७१॥**

प्रकृतिपुरुषाविवेकाद् बन्धमोक्षावित्यभिमानमात्रमिति ॥७१॥

अथ असत्यस्य सत्यपूर्वकत्वात् कस्य बन्धमोक्षौ इत्यत आह—

**प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥७२॥**

आञ्जस्यात्तत्त्वतः । ससङ्गत्वात् गुणयोगात् । यथा पशुः सङ्गाद् गुणयोगाद्बध्यते । तस्मात् प्रकृतेर्बन्धमोक्षौ स्तः । अविवेकिनं प्रति प्रवर्तनमेव बन्धः, मोक्षः पुनर्विवेकिनं प्रत्यप्रवर्त्तनम् । तेन च न स्वभावप्रच्युतिदोष इति ॥७२॥

केन रूपेण प्रकृतिरात्मानं बध्नाति, केन च विमोचयतीत्यत आह--

**रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्**
**विमोचयत्येकेन रूपेण ॥७३॥**

रूपैः सप्तभिः--धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः बध्नाति । विमोचयति च एकेन रूपेण ज्ञानेन ॥७३॥

काम्याकाम्यकर्मभ्यां मुक्तिर्भुक्तिश्चेति, तत्त्यागे दृष्टहानिरित्यत्राह--

**निमित्तत्वमविवेकस्येति न दृष्टहानिः ॥७४॥**

अदृष्टस्य ज्ञानद्वारेण परम्परया कारणत्वं मुक्तौ। संसारस्य तु कारणमविवेकः । तस्मान्न दृष्टहानिरिति ॥७४॥

विवेकश्च कथं स्यादित्यत्राह—

**तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः ॥७५॥**

स्पष्टम् । श्रुतिश्च "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते (बृहदा० ३।९।२६) इत्यादि ॥७५॥

यदि तत्त्वाभ्यासादिना मोक्षः, उपदेशानन्तरं सर्वशिष्याणां मुक्तिः स्यात्, अभ्यासस्य तुल्यत्वादित्यत्राह—

**अधिकारिप्रभेदान्न[1] नियमः ॥७६॥**

उत्तममध्यमाधमशक्तिभेदादेकदेति न नियमः ॥७६॥

यदि विवेकान्मुक्तिः, कथं विवेकिनां भोगदर्शनमित्यत्राह--

**बाधितानुवृत्ते[2]र्मध्य विवेकतोऽप्युपभोगः ॥७७॥**

तीव्रविवेकस्योपभोगो नास्ति। मध्यविवेकस्याप्युपभोगो रागाभावादलमिति ज्ञानेन बाधितत्वाद्वासनानुवृत्तिमात्रम्; उपारूढफलं कर्म उपभोगात् क्षिणोमीत्युपभुङ्क्ते इति ॥७७॥

---

१. अधिकारेति महादेवः ।

२. बाधितानुवृत्त्या इत्यन्येषां पाठः ।

मध्यविवेकिनः स्वरूपमाह—

जीवन्मुक्तश्च[1] ॥७८॥

च इवार्थे। मुक्त इव मुक्तो रागाभावाद् धर्मानुपपत्तेश्च। श्रुतिरपि "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ( बृहदा० ४।४।१२ ) ॥७८॥

जीवतो मुक्तिरित्यनुपपत्तेरिदमाह—

उपदेश्योपदेष्टृत्वात्तत्सिद्धिः ॥७९॥

तीव्रविवेकिनो बाह्यासंवेदिन उपदेष्टृत्वमेव नास्ति मन्द-विवेकिनोऽप्यज्ञानान्नोपदेष्टृत्वम्, किन्तु स उपदेश्यः, उपदेष्टा च मध्यविवेकी। अतस्तत्सिद्धिः जीवन्मुक्तिसिद्धिः ॥७९॥

अत्र प्रमाणं दर्शयति—

श्रुतिश्च ॥८०॥

उवाच "जीवन्नेव हि विद्वान् हर्षायासाभ्यां विमुच्यते"[2] इति ॥८०॥

मन्दविवेकोऽप्युपदेशाद्वा-भविष्यतीत्यत्राह--

---

१. महादेवस्तु चकारं न पठति।

२. प्रचलितेषु श्रुतिग्रन्थेषु नेदं वाक्यमुपलभ्यते, व्यासभाष्ये खलु जीवन्नेव विद्वान् विमुक्तो भवतीति दृश्यते ( ४।३० )।

**इतरथाऽन्धपरम्परा ॥८१॥**

अज्ञानी गुरुः, किं च शिष्योऽज्ञातेति ॥८१॥

उपदेशे हि ज्ञानान्मोक्षः, उपदेशानन्तरं मुच्येत[1], किं विलम्बेनेत्यत्राह--

**चक्रभ्रमणवद्धृतशरीरः ॥८२॥**

यथा दण्डापगमे संस्कारवशाच्चक्रं भ्रमति, तथा विवेकिनामपि देहधारणकर्मणोऽक्षीणत्वान्न तत्क्षणान्मुक्तिः, किन्तूपभोगादिना कर्मक्षयादिति। तथाच श्रुतिः "दीक्षयैव नरो मुच्येत्तिष्ठेन्मुक्तोऽपि विग्रहे। कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः" ॥८२॥

तस्मादस्ति जीवन्मुक्त इत्याह--

**संस्कारलेशतस्तत्सिद्धिः ॥८३॥**

जीवन्मुक्तिसिद्धिः ॥८३॥

कदा परममुक्तिरित्यत्राह--

**विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात् ॥८४॥**

निःशेषेण त्रिविधदुःखस्यात्यन्तनिवृत्तौ कृतकृत्यः, परमुक्तिप्राप्तेः। नेतरात् कर्मण इति। नेतरादिति वीप्साऽध्यायपरिसमाप्तौ ॥८४॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ वैराग्याध्यायस्तृतीयः ॥

१. मुच्यते (पाठा०)।

## चतुर्थ आख्यायिकाध्यायः

वैराग्यानन्तरं शिष्यप्रबोधायाख्यायिकार्थं चतुर्थाध्यायारम्भः—

राजपुत्रवत्तत्त्वोपदेशात् ॥ १ ॥

कश्चिद्राजपुत्रो गण्डक्षणजन्मा निःसारितः शबराधिपेन गृहीतः पुत्रत्वेन तदाचारमात्रं जानाति। अथापुत्रस्य राज्ञो मरणेऽमात्यैरानीय प्रबोधितो 'न त्वं शबरः, राजपुत्रोऽसौ' त्युक्तो झटित्येव पूर्वसंस्कारवशाद्राजपुत्राचारं गृहीतवान्। एवं मन्दानामपि प्रबोधायोपदेशो देय इति ॥ १ ॥

आख्यायिकान्तरमाह—

पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

कश्चिदाचार्यो 'विजने उपदेशं गृहाण' इति शिष्यमादायाटवीं प्रविश्योपदेशं दत्तवान्। गुल्मान्तरितेन पिशाचेन तत् श्रुतम्। तेन तस्यापि मुक्तिरभूत्। प्रसङ्गेनाप्यात्मज्ञानान्मुक्तिरिति वाक्यार्थः ॥ २ ॥

अत्र विशेषमाह—

आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

तीव्रवैराग्याणां श्रुतिमात्रान्मोक्षो भवतु। मन्दानां तु निरन्तरोपदेश्यत्वादावृत्तिः करणीया ॥ ३ ॥

आख्यायिकान्तरमाह—

पितापुत्रवदुभयोर्दृष्टत्वात् ॥४ ॥

कश्चिद् ब्राह्मणो दारिद्र्याद् गुर्विणीं भार्यां तत्पितृगृहे निक्षिप्य प्रतिग्रहार्थं देशान्तरं गतो बहुना कालेन गृहमागतः पुत्रं दृष्ट्वा

न ज्ञातवान्, तन्माता भर्तारं पुत्रं च विज्ञापितवती। तत उभयोरपि ज्ञानमभूत्। गुरुं विना सुहृदुपदेशादपि तत्त्वज्ञानं भवतीत्यर्थः ॥ ४ ॥

आख्यायिकान्तरमाह—

**श्येनवत्सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥**

केनापि पुंसा श्येनशावकः प्राप्तः खण्डगुडादिनाहारेण समानेन च पुष्टः, कालेन यौवनमवाप। 'कथमहमेनं दुःखिनं करोमी'ति पुंसा वने त्यक्तः। श्येनश्च बन्धत्यागात्सुखी पुरुषवियोगाद् दुःखीति। दुःखशबलत्वात्सुखस्य द्वयमपि हेयमिति ॥५॥

आख्यायिकान्तरमाह—

**अहिनिर्ल्वयनीवत्[1] ॥ ६ ॥**

निर्ल्वयनी निर्मोकः। कश्चिदहिर्विवरद्वारे निर्मोकं त्यक्त्वा ममेदमिति धूलीपङ्काक्तं दृष्ट्वा शोचति, स्नेहाच्च न संत्यक्तवान्। निर्मोकानुसारात्केनाप्याहितुण्डिकेन[2] गृहीतः। ममत्वस्नेहादयो न कर्त्तव्या इत्यर्थः ॥ ६ ॥

आख्यायिकान्तरमाह—

**छिन्नहस्तवद्वा ॥ ७ ॥**

कश्चिन्मुनिर्भ्रातुराश्रमं प्रविश्य फलादिकमाजहार। भ्रात्राप्युक्तः स्तेयी त्वमिति। तेनोक्तं प्रायश्चित्तं वद। भ्रात्राप्युक्तं हस्तच्छेदादन्यत्प्रायश्चित्तं नास्तीति। तेन च राज्ञे निवेद्य स्वहस्तौ

---

१. 'अहिनिर्ल्वयिनीवत्', अहिनिर्लयनीवत् (पाठा०)।

२. अहिस्तालुकेन इति क्वचित् पठ्यते, सोऽपपाठः।

छेदितौ। तस्मादकार्यं न कर्त्तव्यम्, प्रमादकृते च तन्निष्कृतिरवश्यं कर्तव्येति। ॥ ७ ॥

आख्यायिकान्तरमाह—

**असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥**

भरतो नाम नृपः प्रत्यासन्नमोक्षोऽपि तत्क्षणप्रसूतां हरिणीं दृष्ट्वा हरिणशावकं पुपोष। तं विहाय नान्यमना बभूव। मरणसमये तद्गतमनाः प्राणांस्तत्याज तत्सङ्गान्मुक्तिं नावाप। अनिष्टचिन्तनं न कार्यमित्यर्थः ॥ ८ ॥

बहुभिर्मेलनं[1] न कुर्यादित्याह—

**बहुभिर्योगविरोधो[2] रागादिभिः कुमारीशङ्खवत् ॥ ९ ॥**

बहुभिः कलहोऽवश्यम्, यथा कुमारीशङ्खानामन्योऽन्यं झणत्कारः परस्परसंघर्षात् ॥ ९ ॥

द्वाभ्यामपि न कुर्यादित्याह—

**द्वाभ्यामपि तथैव ॥१०॥**

संकथनादिदोषात् ॥ १० ॥

आख्यायिकान्तरमाह—

**निराशः सुखी पिङ्गलावत्[3] ॥११॥**

पिङ्गला नाम वेश्या रत्यर्थं भुजङ्गागमनप्रतीक्षणादुन्निद्रा[4] दुःखमनुभूतवती। एकदा त्वत्यन्तदुःखनिर्विण्णा पुनर्नैवं करिष्यामीति निर्विण्णा बभूव। निराशा सुखं स्वपिति[5] ॥११॥

---

१. मेलकमिति क्वचित्। २. योगे विरोधः ( पाठा० )।

३. पिङ्गलादिवत् इति क्वचित्।

४. प्रतीक्षमाणा उन्निद्रा ( पाठा० )।

५. आशैव दुःखं तत्त्यागः सुखमित्यभिप्राय इत्यधिकं क्वचित्।

गृहारम्भो दुःखायेत्याह—

**अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥**

व्यक्तम् ॥१२॥

शास्त्रे व्याख्यान-परोपालम्भादिकमसारमस्ति, तत्परित्यजनीयमित्याह—

**बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥१३॥**

यथा भ्रमरः पुष्पं विहाय मधु समादत्ते, तद्वन्मोक्षार्थिनाऽ[1]विद्या त्याज्येति ॥ १३ ॥

कस्य समाधिर्भवतीत्यत्राह—

**इषुकारवन्नैकचित्तस्य समाधिहानिः ॥१४॥**

यथेषुकार इषौ गतमनाः समीपे गच्छन्तं राजानं न बुद्धवान्, तथैवैकाग्रमनसो न समाधिहानिरिति ॥ १४ ॥

सत्त्वशुद्ध्यर्थं न व्रतादिभङ्गः कर्त्तव्य इत्याह—

**[2]व्रतनियमलङ्घनादानर्थक्यं लोकवत् ॥१५॥**

यथा लोके बहुशः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनाद्वेदार्थबाह्यो भवतीति ॥ १५ ॥

तत्त्वज्ञानविस्मरणेन[3] दुःखमवश्यं भवतीत्याह—

**तद्विस्मरणेऽपि भेकीवत् ॥१६॥**

कश्चिन्नृपो मृगयां गतो वने सुन्दरीं कन्यामपश्यत्। तामपृच्छत्का त्वमिति। सा प्राह राजदुहिताहम्। राजा प्राह—मां भजस्व। सा प्राह बाढम्, किं तु समयं कुरु, त्वया जलं मम न दर्शनीयमिति। एवमस्त्वित्युक्त्वा तस्याः पाणिं जग्राह। एवं गते

---

१. विद्या ( पाठा० ), उपविद्या ( पाठा० )।

२. कृतनियम ( पाठा० )। ३. विस्मरणे ( पाठा० )।

काले क्रीडयायासिता कुत्र जलमिति राजानं पप्रच्छ। राजापि संभ्रमात्समयं विस्मृत्य जलमदर्शयत्। सा च भेकराजदुहिता जलस्पर्शाद्भेकी बभूव। राजापि जालादिना तामन्विष्याप्राप्य बहु दुःखमनुबभूव। तस्मात्तत्त्वाभ्यासविच्छेदो न कार्य इति ॥ १६ ॥

आख्यायिकान्तरमाह—

**नोपदेशश्रवणेऽपि कृतकृत्यः[1] परामर्शादृते विरोचनवत् ॥१७॥**

न श्रवणमात्रान्मुक्तिः, किं तु मननादेव। यथेन्द्रविरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं गतौ ब्रह्मणा चोपदिष्टौ। विरोचनस्तत्त्वज्ञानश्रवणात्स्वगृहमागतो न मननादि[2] कृतवान्। अतो नामुच्यत। इन्द्रस्तु ब्रह्माणमाराधयन्बहुकालं मननमकरोत् ॥१७॥

इन्द्रस्य किं वृत्तमित्यत्राह—

**दृष्टस्तयोरिन्द्रस्य ॥१८॥**

तयोर्मध्ये इन्द्रस्य बोधो दृष्टः। बहुकालाभ्यासेन ब्रह्मप्रसादनान्मनननिदिध्यासनसाक्षात्कारात्सिद्धिरिति ॥ १८ ॥

ज्ञानप्राप्तिश्च कथमित्यत्राह—

**प्रणतिब्रह्मचर्योपसर्पणानि[3] कृत्वा सिद्धिर्बहुकालात् तद्वत् ॥१९॥**

अप्रणतस्याब्रह्मचारिणोऽनधिकारः। तद्वत् इन्द्रवत्। यथा ब्रह्माराधनेनेन्द्रेण ज्ञानं प्राप्तम्, तथा गुर्वाराधनेनान्येनापि ॥१९॥

---

१. 'कृतकृत्यता' इत्यन्ये व्याख्याकाराः। २. मननं ( पाठा० )।
३. उपसर्पणान् कृत्वा ( पाठा० )।

किं कालदेशनियमान्मुक्तिः । तथा च चिरक्षिप्रभावो न स्यादित्यत्राह—

**न कालनियमो वामदेववत् ॥२०॥**

आराधनार्थं कालनियमो न मोक्षार्थम्, वामदेवस्य तत्त्वज्ञानात्क्षिप्रं मुक्तिदर्शनात् ॥ २० ॥

ज्ञाते हि ध्यायेत्, न चात्मा केनापि दृष्टः, दृष्टश्चेत् किं ध्यानेनेत्यत आह—

**अध्यस्तरूपोपासनात्पारम्पर्येण यज्ञोपासकानामिव ॥२१॥**

धर्मः केन दृष्टः, तथापि धर्मलाभाय यज्ञोपासनम्, पारम्पर्येण देवतोद्देशेन हविस्त्यागात् । अत्रापि गुरुणा यदध्यस्तं रूपमुपदिष्टं, तत्स[1]दृशोपासनात्पारम्पर्येण तद्रूपं प्रकाशते । दृष्टं च समानवस्तुचिन्तायां समानानुस्मरणम् । तथा च--

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः ।
अतो नातिप्रसङ्गोऽस्ति स्वप्नादौ भावनाबलात् ॥ २१ ॥

ब्रह्मादिलोकलाभात्कृतकृत्यस्य किमात्मज्ञानेनेत्यत्राह—

**इतरलाभेऽप्यावृत्तिः[2] पञ्चाग्नियोगतो जन्मश्रुतेः ॥२२॥**

अग्निहोत्रादिना ब्रह्मलोकप्राप्तिः, कर्मजश्च क्षीयत इति पुनरावृत्तौ जन्मश्रुतिः "यथेह कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति, ( छान्दोग्य० ८।१।६ ); "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति ( तै० आ० १०।१०।३ ) ॥ २२ ॥

विरक्तस्य किं स्वरूपमित्यत्राह—

---

१. तत्स्वरूप ( पाठा० ) । २. व्यावृत्तिः ( पाठा० ) ।

विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥२३॥

यद्यपि सर्वेषां हेयहानमुपादेयोपादानं तथापि प्रकरणविशेषाद्धेयः संसारः, उपादेयो मोक्ष इति द्रष्टव्यम् ॥ २३ ॥

अत्र युक्तिमाह—

लब्धातिशययोगाद्वा[1] तद्वत् ॥२४॥

हंसवत्, हंसस्येवातिशयशक्तिर्येन मिश्रितमपि क्षीरं पिबति जलं त्यजति। तथा लब्धातिशयस्य पुंसः संसारो हेय उपादेयो मोक्ष इति ॥ २४ ॥

सरागस्यापि मुक्तिर्भविष्यतीत्यत्राह—

न कामचारित्वं[2] रागोपहते शुकवत् ॥२५॥

रागोपहतस्य कामचारित्वमेव नास्ति, किं पुनर्मुक्तिरिति। यथा व्यासस्य सरागस्य न मुक्तिरिति। तत्सुतस्य शुकस्य वीतरागत्वान्मुक्तिर्भूतैवम् ॥२५॥

बन्धः कथमित्यत्राह—

गुणयोगाद् बन्धः[3] शुकवत् ॥२६॥

यथा शुकः पक्षी गुणयोगाद् बन्धमाप्नोति, तथा गुणयोगात्पुमानपि बन्धमाप्नोति ॥२६॥

भोगादेव वैराग्यं कालवशाद्भविष्यति, किं ज्ञानेनेत्यत्राह—

न भोगाद्रागशान्तिर्मुनिवत् ॥२७॥

न मुनेरपि भोगाद्रागशान्तिः, किं पुनरन्यस्य। यथा [4]कण्वसौभरिप्रभृतयः ॥२७॥

विषयिणां कथं वैराग्यं भविष्यतीत्यत्राह—

---

१. वेति न सार्वत्रिकः पाठः। २. कामविचारित्वम् (पाठा०)।
३. बद्धः (पाठा०)। ४. कश्यपसौभरि (पाठा०)।

**दोषदर्शनादुभयोः ॥२८॥**

उभयोः आत्मनो विषयस्य च । आत्मनो दोषः सङ्गान्नरकपातो गर्भवासादिश्च । विषयदोषः परिणतिविरसत्वादिः ॥२८॥

उपदेशानधिकारिणं पुरुषमाह—

**न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥२९॥**

यथा संस्कृते क्षेत्रे न बीजप्ररोहः, तथा रागादिमलिनचेतसि नोपदेशबीजप्ररोहः । अजवदिति अजनाम्नि नृपे भार्याशोकार्ते तथा वसिष्ठेनोपदेशो[1] दत्तो न स्थिरोबभूव ॥२९॥

रागादिमलिने चेतसि नाभासज्ञानमपीत्याह—

**नाभासमात्रमपि मलिनदर्पणवत् ॥३०॥**

यथा मलिने दर्पणे मुखाभासमपि न प्रतिभाति, तथा प्रधानप्रतिबिम्बितत्वादात्मनः प्रधानकार्यमात्मज्ञानम् ॥३०॥

ननु महानेव कारणरूपत्वादात्मास्त्वित्यत्राह—

**न तज्जस्यापि[2] तद्रूपता पङ्कजादिवत्[3] ॥३१॥**

न कार्यमेव कारणं भेदात् । नहि पङ्कज एव पङ्कः ॥३१॥

अणिमादिविभूतिसिद्धस्यापि न कृतकृत्यतेत्याह—

**न भूतियोगे कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥३२॥**

यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्यानावृत्तेः कृतकृत्यता, तथा न भूतियोगेन, पुनरावृत्तेः ॥ उपास्यसिद्धिवदिति वीप्साऽध्यायपरिसमाप्तौ ॥३२॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
आख्यायिकाध्यायश्चतुर्थः ॥



---

१. उपदेशे दत्ते (पाठा०) । २. तज्जन्यस्यापि ( पाठा० ) ।
३. पङ्कजवदितीतरे व्याख्याकाराः ।

## पञ्चमः परपक्षनिर्जयाध्यायः

आख्यायिकानन्तरं परपक्षनिरासार्थं पञ्चमाध्यायारम्भः—

**मङ्गलाचरणं शिष्टाचारात्फलदर्शनाद् भूतितश्चेति[1] ॥१॥**

कृतेऽपि मङ्गले ग्रन्थापरिसमाप्तेरकृतेऽपि समाप्तेः, किं मङ्गलेनेति यैरुक्तं तदनेन निरस्तम् ॥१॥

पूर्वसिद्धमीश्वरासत्त्वम्। इदानीं न्यायमाह—

**नेश्वराधिष्ठिते[2] फलसंपत्तिः[3] कर्मणा तत्सिद्धेः ॥२॥**

यदीश्वरः स्वतन्त्रः कर्ता, कर्मणा विनापि कुर्यात्। अथ कर्मसहकारी कुरुते। कर्मैवास्तु, किमीश्वरेण। न च सहकारी प्रधानशक्तिं बाधते; स्वातन्त्र्यविघातात्। किं च स्वार्थ-परार्थाभ्यां प्रवृत्तिर्दृष्टा। न चेश्वरस्य स्वार्थमस्ति। परार्थत्वे कारुणिकस्य दुःखमयसृष्ट्यनुपपत्तिः। न च परार्थप्रवृत्तिः, परोपकारादिनापि स्वार्थलाभात्प्रवृत्तेः। तस्मात्कर्मैव जगत्कारण-मस्तु ॥२॥

एतद्दर्शयति—

**स्वोपकारादधिष्ठानं लोकवत् ॥३॥**

न च नित्यस्य स्वोपकारः संभवति[4] ॥३॥

स्वोपकार एव भविष्यतीत्यत्राह—

---

१. श्रुतितश्चेति महादेवः। २. नेश्वराधिष्ठितेव (पाठा०)।
३. फलनिष्पत्तिरित्यन्ये व्याख्याकृतः। ४. समस्ति (पाठा०)।

**लौकिकेश्वरवदितरथा ॥४॥**

असर्वज्ञ इत्यर्थः ॥४॥

दूषणान्तरमाह—

**पारिभाषिको वा ॥५॥**

प्रकृतिच्छायापत्त्या तत्कर्तृत्वादात्मैव कर्तेति तस्येश्वरसंज्ञेति परिभाषेति ॥५॥

हेत्वन्तरमाह—

**न रागादृते तत्सिद्धिः[1] प्रतिनियतकारणत्वात् ॥६॥**

अविनाभावस्य कारणस्य व्यभिचारे सर्वत्रानाश्वासः। रागश्च प्रवृत्तिनिमित्तमिति तं विना कथं जगन्निर्मातृत्वं, न च मुक्तस्य रागोऽस्ति ॥६॥

राग एव भविष्यतीत्यत्राह—

**तद्योगेऽपि न नित्यमुक्तः ॥७॥**

रागयोगेऽपि ॥७॥

प्रधानशक्तियोगात्कर्तृत्वं भविष्यतीत्राह—

**प्रधानशक्तियोगाच्चेत्सङ्गापत्तिः ॥८॥**

'असङ्गो ह्ययं पुरुषः' इति (बृहदा० ४।३।१६) तद्विरोधापत्तिः ॥८॥

न प्रधानसङ्गः, किं तु प्रधानसत्तामात्रेण कर्तृत्वं भविष्यतीत्यत्राह—

---

१. जगत्सिद्धिरित्यन्येषां पाठः।

सत्तामात्राच्चेत् सर्वैश्वर्यम् ॥९॥

सर्वात्मनः प्रति प्रधानसत्ताया अविशेषात्सर्वात्मनामीश्वरत्वम् ॥९॥

ईश्वरसाधनानि सन्ति । तत्कथमित्यत्राह--

प्रमाणाभावान्न तत्सिद्धिः ॥१०॥

प्रत्यक्षप्रमाणाभावात् ॥१०॥

अनुमानं भविष्यतीत्यत्राह--

संबन्धाभावान्नानुमानम् ॥११॥

प्रत्यक्षपूर्वकत्वाद् व्याप्तेस्तदभावात्कुतः संबन्धग्रहः[1] । न चासाधारणस्य संबन्धग्रहः ॥११॥

शाब्दं प्रमाणं भविष्यतीत्यत्राह--

श्रुतिरपि प्रधानकार्यस्य[2] ॥१२॥

'प्रधानाज्जगदुत्पद्यत' इति श्रुतिरस्ति[3] । तस्मादीश्वरसाधकप्रमाणान्याभासानि ॥१२॥

अविद्यायोगादात्मनः कर्तृत्वमिति केचित् । तत्राह--

नाविद्याशक्तियोगो निःसङ्गस्य ॥१३॥

व्यक्तम् ॥१३॥

दूषणान्तरमाह--

तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥१४॥

अविद्यया विना न सृष्टिः, सृष्ट्या विना नाविद्येत्यन्योऽन्याश्रयत्वम् ॥१४॥

---

१. संबन्धसंग्रहः (पाठा०) ।　　　२. कार्यत्वस्येत्यन्ये पठन्ति ।

३. उपलभ्यमानासु श्रुतिषु नेदं वचनं दृश्यते, श्रुत्यर्थमूलकमिदं वचनमिति प्रतिभाति ।

अनादित्वाद् बीजाङ्कुरवन्नान्योऽन्याश्रयत्वमित्याह--

**न बीजाङ्कुरवत्सादिसंसारश्रुतेः ॥१५॥**

भवेदेवं यद्यनादिः संसारः, किं तु सादिः संसारः। श्रुतिश्च--

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ॥
सं बाहुभ्यां धमति सं पतत्रै-
र्द्यावाभूमी जनयन्देव एकः ॥

( माध्यन्दिनसंहिता १७।१९, ऋक्संहिता १०।८१।३ )
तस्मात्प्रलये प्रवाहविच्छेद इति ॥१५॥

अविद्यास्वरूपमाह--

**विद्यातोऽन्यत्वे ब्रह्मबाधप्रसक्तेः[1] ॥१६॥**

विद्यातोऽन्यत्वे ब्रह्मणोऽपि विद्यातोऽन्यत्वेऽविद्यात्वं स्यात्। ततश्च ब्रह्मत्वबाध इति ॥१६॥

युक्त्यन्तरमाह--

**अबाधे नैष्फल्यम्[2] ॥१७॥**

यदि विद्ययाऽविद्या न बाध्यते, विद्यैव न भविष्यतीति ॥१७॥
बाध्यत एवेत्यत्राह--

**विद्याबाध्यत्वे जगतोऽप्येवम् ॥१८॥**

जगतोऽप्यविद्यात्वम् ॥१८॥
अस्ति जगतोऽप्यविद्यात्वमित्यत्राह--

---

१. ब्रह्मभावप्रसङ्ग इत्यन्ये पठन्ति।
२. नैष्कल्यमित्यपपाठः।

तद्रूपत्वे सादित्वम् ॥१९॥

अनादिरियमविद्या। जगतस्तद्रूपत्वेऽविद्यायाः सादित्वम् ॥१९॥

न कर्मणो जगत्कारणत्वम्, स्वभावादेव जगदुत्पद्यत इत्यत्राह—

न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥

प्रकृतेर्नित्यत्वात्स्वभावस्यैक[1] त्वाद्धर्माभावाद्विचित्रकार्यानुपपत्तिः। तस्माद्धर्मभेदेन कार्यवैचित्र्यम्, न धर्मापलापः ॥ २० ॥

धर्मसिद्धौ प्रमाणमाह—

श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

'श्रुती' ति शाब्दं प्रमाणं दर्शितम्, 'लिङ्गे' त्यनुमानम्। आदिशब्दाद्योगिप्रत्यक्षं दर्शितम्। एभिर्धर्मस्सिद्धिः ॥ २१ ॥

यदि देशकालयोर्न कारणत्वम्, कथं कश्मीरे कुङ्कुमं वसन्ते चूतमुकुलोत्पत्तिरित्याह—

न नियमः प्रमाणान्तरावकाशात् ॥ २१ ॥

नादृष्टमेव कारणमिति नियमः। किं त्वदृष्टं सहकारिकारणम्, अन्येषामपि कारणत्वं प्रमाणसद्भावात् ॥ २२ ॥

दुःखमयसंसारदर्शनाद् दुरितादृष्टमेवास्त्वित्यत्राह—

उभयत्राप्येवम् ॥ २३ ॥

सुखस्यापि दर्शनाच्छुभादृष्टमेवास्तु ॥ २३ ॥

दुःखाभावे सुखाभिमानात्तत्रादृष्टशब्दो मुख्यः, सुखकारणे गौण इत्यत्राह—

---

1. भावस्यैकत्वात् ( पाठा० )।

**अर्थात्सिद्धिश्चेत्समानमुभयोः ॥ २४ ॥**

[1]एतद्विपरीतसंभवादुभयोस्तुल्यत्वमिति ॥ २४ ॥

धर्मादीनामात्मधर्मत्वं निषेधति—

**अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥**

बुद्धिधर्मत्वम्। आत्मधर्मत्वे निःसङ्गत्वश्रुतिविरोधः ॥ २५ ॥

अन्यधर्मस्यान्यत्र कार्यादर्शनाद्धर्मसत्त्वमेव धर्मादीनामित्यत्राह—

**गुणादीनां [2]नात्यन्तबाधः ॥ २६ ॥**

यथा पृथिव्यादीनां दृष्टत्वान्नात्यन्तबाधः, तथा गुणादीनां धर्मादीनामपि। अन्यधर्मस्याप्यन्यत्र कार्यकरणं चितिच्छायापत्त्येत्युक्तम् ॥ २६ ॥

दुःखाभावः सुखमिति तत्प्रतिषेधार्थमाह—

**पञ्चावयवयोगात्[3] सुखसंवित्तिः ॥ २७ ॥**

यद्यपि मानसप्रत्यक्षेण भावरूपं सुखमवसीयते, तथापि परबोधाय प्रमाणमप्युक्तम्। पञ्चावयवयोगादिति द्व्यवयवमनुमानमिति निरस्तम्। प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनमिति पञ्च। अनेन पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरसत्प्रतिपक्षत्वमबाधितविषयत्वं च सिद्धम् ॥ २७ ॥

सकृद्दर्शनान्न व्याप्तिरित्याह—

---

१. अर्थादर्थापत्तिप्रमाणेन इत्यधिकं क्वचित्।

२. गुणादीनां च न''' इत्यन्ये पठन्ति।

३. संयोगादिति क्वचित् पठ्यतेः।

न सकृद् ग्रहणात्संबन्धसिद्धिः ॥ २८ ॥

स्वप्रतीतिविरोधात् । तथा च बह्निरासभयोः सकृद्दर्शनादनुमानं स्यात् । नैवं प्रतीयत इति ॥ २८ ॥

केयं व्याप्तिरित्यत्राह—

[1]नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥

उभयोरिति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः । एकतरस्य विषमव्याप्तिकस्य धूमस्येति । तथा च—

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्[2] ॥२९॥

तत्त्वान्तरं व्याप्तिरिति । तन्निराकरोति—

न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥३०॥

तत्त्वान्तरस्वीकारेऽप्यव्यभिचारो वक्तव्यः । स एवास्तु किं वस्तुकल्पनयेति ॥३०॥

स्वमतमाह—

निजशक्त्युद्भवमित्याचार्याः ॥३१॥

अस्ति वह्निधूमयोर्निजा शक्तिः । सा द्वयोर्दर्शनेन गृह्यते । सैव व्याप्तिरिति ॥३१॥

एकदेशिमतमाह—

आधेयशक्तियोग इति पञ्चशिखः ॥३२॥

यदि निजा शक्तिः, अव्युत्पन्नस्यापि वस्तुनो दर्शनात् 'अत्रायं

---

१. नियतमिति केषांचित् पाठः ।

२. कुसुमाञ्जलितृतीयस्तबकेऽप्ययं श्लोक उद्धृतः ।

शक्त' इति ज्ञानं स्यात्। न चैवम्। तस्मादाधेयशक्तिर्वा-च्येति ॥३२॥

युक्तिमाह—

**न स्वरूपशक्तिर्नियमः[1] पुनर्वादप्रसक्तेः ॥३३॥**

यदि स्वरूपं शक्तिः, शक्तो मल्ल इति पुनरुक्तं स्यात् ॥३३॥

युक्त्यन्तरमाह—

**विशेषणानर्थक्यप्रसक्तेः ॥३४॥**

शक्तो देवदत्त इति प्रत्ययो न स्यात्, किं तु देवदत्तो देवदत्त इति ॥३४॥

अपरां युक्तिमाह—

**पल्लवादिष्वनुपपत्तेः[2] ॥३५॥**

पल्लवादिषु स्वरूपस्य तादवस्थ्यादप्रयुक्तेऽपि मन्त्रे विषाप-नोदनं स्यात् ॥३५॥

समाधानमाह—

**आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥**

निजा चासौ शक्तिश्चेति निजशक्तिः, न तु स्वरूपमेव शक्तिः। तथा चाधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायत्वात्। तथा च शक्तेरविशेषादाधेयशक्तियोगो वा निजशक्तियोगो वेति समानो न्यायः। यच्च वस्तुग्रहणे प्रथमं न गृह्यते, चित्रशक्तित्वात्पदार्था-नाम्, यथा स्थितोऽपि पितापुत्रसंबन्धो विनोपदेशान्न गृह्यते। अत एवोक्तं निजशक्त्युद्भवम् (५।३१) इति ॥३६॥

---

१. स्वरूपशक्तिर्नियम इत्यन्ये पठन्ति।

२. अनुपपत्तेश्चेत्यन्येषां पाठः।

पदपदार्थयोस्तादात्म्यं निषेधति—

**वाच्यवाचकसंबन्धः[1] शब्दार्थयोः ॥३७॥**

तादात्म्यपक्षे घटोऽपि श्रोत्रग्राह्यः स्यात्, शब्दोऽपि चाक्षुषो भवेत्, अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्ग इति ॥३७॥

अत्र हेतुमाह--

**त्रिभिः संबन्धसिद्धेः[2] ॥३८॥**

त्रिभिः प्रकारैर्व्युत्पत्तिग्रहणात्। आप्तोपदेशात्, यथा 'अयं घट' इति। वृद्धव्यवहारात्, यथा 'गामानय शुक्लां दण्डेनेति'--अत्र प्रयोजकवृद्धवाक्यात्प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य। प्रसिद्धपदसामानाधिकरण्यात्, यथा 'पक्षी आम्रं भक्षयति' इति श्रुत्वाम्रभक्षणार्थं जानाति, पक्षीति तदानीं प्रतिपद्यते ॥३८॥

कार्ये व्युत्पत्तिरिति नियमं व्युदस्यति—

**न कार्ये नियम उभयथा दर्शनात् ॥३९॥**

कार्ये व्युत्पत्तिर्दृष्टा, यथा 'अहरहः संध्यामुपासीत' इति। सिद्धार्थे च दृष्टा, यथा 'हरिर्देवाधिदेवः' इति। तथा हि विध्यर्थ-वादमन्त्रात्मका वेदाः। विधौ कार्यतैकार्थ[3] समवेतायमिष्टसाधन-तायां प्रामाण्यम्। विधिशक्तेरुत्तम्भकत्वेनार्थवादस्यापि पारम्पर्येण प्रवर्तकत्वात्प्रामाण्यम्। विहितस्मारकत्वेन मन्त्रस्यापि प्रामाण्यम्। यत्तु प्रवृत्तिनिमित्तत्वान्मन्त्रार्थवादयोः प्रामाण्यं न तु प्रतिपादकत्वम्, तन्न, उत्पत्तावस्ति प्रवृत्त्यर्थत्वं ज्ञप्तौ तु

---

१. वाच्यवाचकभावः संबन्ध इत्यन्येषां पाठः।

२. सिद्धिरित्यन्येषां पाठः।　३. कार्यैकार्थ ( पाठा० )

सिद्धार्थपरत्वमेव । तस्मात्सिद्धार्थप्रतिपादकयोरप्यर्थवादमन्त्रयोः प्रामाण्यमिति ॥३९॥

अतीन्द्रियत्वाद्वेदार्थस्य कथमुभयथा व्युत्पत्तिरित्यत्राह--

**लोक[1] व्युत्पन्नस्य वेदार्थप्रतीतेः ॥४०॥**

"य एव लौकिकास्त एव वैदिकाः" इति[2] सामान्यादिहापि व्युत्पत्तिरिति ॥४०॥

भवेदेवं, यदि वेदस्य पौरुषेयत्वं स्यात्, न चैवमित्याह—

**न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात्[3] ॥ ४१ ॥**

ईश्वरस्य निराकृतत्वाद् अन्यस्यासंभवात्, भ्रान्तेः पुरुषधर्मत्वेनाप्तत्वानिश्चयाद्वेदस्याप्रामाण्यापत्तेरिति । ॥ ४१ ॥

वेदाप्रामाण्ये यागादावनाश्वास इति वेदप्रामाण्यप्रतिपादनार्थमाह[4] —

**न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥४२॥**

वैशिष्ट्यं कालदेशपात्रापेक्षया । तन्निरपेक्षत्वे न स्वरूपतो

---

१. 'लोके' इत्यन्येषां पाठः ।

२. इदं शाबरभाष्यवचनम् (१।३।३०) । अयमेको न्याय इत्याह स्कन्दस्वामी निरुक्तटीकायाम् भाग १, पृष्ठ १८) । य एव वैदिकास्त एव लौकिका इत्युवटः ( वाजसनेयिप्रातिशाख्य १।३ टीका ) ।

३. तदर्थस्यातीन्द्रियत्वादित्यन्ये ।

४. वेदाप्रामाण्ये यागादावनाश्वास इति वाक्यं ४१ वृत्तिस्थमिति गार्बेमहोदयो मन्यते । मतमिदं ग्रन्थस्वारस्यविरोधीति प्रतीयते ।

धर्मत्वम् । अन्यथाऽशुद्धकाले म्लेच्छदेशे महापातकिभिः कृता यज्ञादयो धर्महेतवः स्युः । न चैवम् ॥४८॥

अज्ञस्य फलदर्शनाद्वेदप्रामाण्यमिति व्युत्पत्त्या किं क्रियत इत्यत्राह—

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥४३॥**

अयं शब्दोऽत्र वाचकत्वेन मुख्योऽत्र गौण इति व्यवच्छिद्यते[1] ॥४३॥

व्युत्पत्तिसिद्धिः कथं ज्ञायत इत्यत्राह—

**योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः ॥४३॥**

प्रसिद्धाप्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वाद् व्युत्पत्तिसिद्धिः ॥४४॥

वेदनित्यत्वं निराकरोति—

**न नित्यत्वं वेदानां कार्यत्वश्रुतेः[2] ॥४५॥**

श्रुतिस्तावत्, "नाहरासीन्न रात्रीरासीत्[3]" "स तपोऽतप्यत, तस्मात्तपस्तेपानात् त्रयो वेदा अजायन्त[4] ।" अनुमानं च कृतकत्वादित्यादि । प्रत्यक्षेणाप्युच्चरितप्रध्वंसिनो वर्णा इति गृह्यन्ते । यस्तु 'स एवायं कवर्णः' इति प्रत्ययः, स सामान्यविषयः ॥४५॥

अनित्यत्वात्पौरुषेया वेदा इति । तत्राह—

---

१. विच्छिद्यत इत्यपपाठः सूत्रे वृत्तौ च ।

२. कार्यश्रुतेः ( पाठा० ) ।

३. अनुपलब्धमूलमिदं वाक्यम्; यद्वा नासदीयसूक्तार्थस्मरणमूलकं वचनम् ।

४. तुल० शतपथ १३।५।८।३; ६।१।१।८ इति च ।

**न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥४६॥**

निराकृत ईश्वर इत्यभिसंधिः ॥ ४६ ॥

अन्य एव कर्ता भविष्यतीत्यत्राह—

**न[1] मुक्तामुक्तयोरयोग्यत्वात् ॥४७॥**

मुक्तस्य निःसङ्गत्वात्कर्तृत्वायोगाद् अमुक्तस्य युगपदुपादानानभिज्ञत्वादिति ॥ ४७ ॥

अपौरुषेयत्वात्तर्हि नित्यत्वम् । अत आह—

**नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥४८॥**

स्पष्टम ॥ ४८ ॥

अङ्कुरादीनामपि सकर्तृकत्वं कार्यत्वादिति पक्षे मुक्तस्य कर्तृत्वमित्यत्राह—

**तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥४९॥**

अङ्कुरादीनां कर्तुरदृश्यत्वात्प्रत्यक्षबाधः । अयोग्यश्च कर्ता नास्तीत्युक्तम् । आदिशब्दाद् व्याप्यत्वासिद्धिर्दर्शिता ॥ ४९ ॥

अनित्यत्वपौरुषेयत्वयोर्व्याप्तिर्नास्तीत्याह—

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥५०॥**

यथा घटादिषु, न तु वृक्षादिषु । अदृष्टेऽपीति कर्तर्यदृष्टेऽपि । न कार्यमात्रं सकर्तृकम् , किं तु कार्यविशेषः ॥ ५० ॥

परतः प्रामाण्यं दूषयति—

---

१. नेति न पठ्यतेऽन्यैः । एवं सत्यपि नार्थभेदो जायते ।

## निजशक्त्यभिव्यक्तेः[1] स्वतः प्रामाण्यम् ॥ ५१ ॥

निजशक्ति ज्ञानजनकसामग्रीमात्राधीनं प्रामाण्यम्[2], न त्वधिकं गुणमपेक्षते, उत्पत्तिपक्षे। ज्ञप्तिपक्षे[3]ऽप्यौत्सर्गिकी ज्ञानग्राहकाणां प्रामाण्यबोधशक्तिः। तदभिव्यक्तेः स्वतः प्रामाण्यम्, झटिति प्रवृत्तेश्च। यत्रापि शङ्कानिवृत्तये प्रामाण्यजिज्ञासार्थं प्रमाणानुसरणम्, तत्रापि कारणदोषोत्सारणाय[4], न गुणाय। अत एवाप्रामाण्यं परतः, तत्र दोषस्यापि कारणत्वादिति ॥ ५१ ॥

बौद्धमतं दूषयति—

## नासतः ख्यानं नृशृङ्गवत् ॥५२॥

इदं रजतमित्यसदेव शुक्तिरजततादात्म्यं प्रतिभाति। तन्न, असतो ऽर्थक्रियाविरहाज् ज्ञानजनकत्वानुपपत्तेः, यथा मनुष्यशृङ्गस्य ॥ ५२ ॥

प्राभाकरमतं दूषयति--

## न सतो बाधदर्शनात् ॥५३॥

इदं रजतमिति 'इदमि' ति पुरोवर्तिविषयम्, 'रजतमि' ति स्मरणम्। द्वे इमे संवित्ती। भेदाग्रहात्प्रवृत्तिः। न अभेदग्रहणात्प्रवृत्तिदर्शनात्, नेदं रजतमिति बाधाच्च। न च सम्यग्ज्ञानस्य बाधो ऽस्ति। तथा च सत्ययं घट इति ज्ञाने जाते 'नायं घट' इति ज्ञानं स्यात् ॥ ५३ ॥

वेदान्तिमतं दूषयति—

---

१. निजशक्त्याभिव्यक्तेरिति महादेवः।

२. प्रमाणानां प्रामाण्यम् ( पाठा० )।

३. ज्ञानपक्षे इति गार्वेसंमतपाठतः ज्ञप्तीति पाठः साधुतरः।

४. दोषोत्सारणाय ( पाठा० )।

नानिर्वचनीयस्य तदभावात् ॥५४॥

इदं रजतमित्यसत्त्वे ऽपरोक्षज्ञानाभावात् सत्यत्वे बाधाभावात्, अतः सदसद्विलक्षणानिर्वचनीयत्वम्। तथा च—

न सत्त्वे बाधसंवित्तिर्न भानमसतोऽपि च।
न द्वयात्म्यं[1] विरुद्धत्वादतस्तत्त्वान्तरं कुतः॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम्[2]॥
अद्वैतागमवाक्यं तु तत्त्वावेदकलक्षणम्[3]।
प्रमाणभावं भजते बाधवैधुर्यहेतुतः॥
तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता।
अद्वैतागमवाक्यानामिति तावद् व्यवस्थितम्॥

तन्न, इदं रजतमित्यनेनैव निर्वचनीयत्वात् 'न सन्नासन्नि' त्यनिर्वचनीयत्वेन[4] निर्वचनीयत्वाच्च ॥५४॥

न्यायमतं दूषयति—

नान्यथाख्यातिः स्ववचोव्याघातात् ॥५५॥

इदं रजतमिति शुक्तिरेव रजतात्मनावभासत इति। न, अन्यदन्यात्मनावभासत इति संवद्विरुद्धम् ॥५५॥

आरोपितरजतमेव तत्रावभासत इति स्वमतमाह —

सदसत्ख्यातिर्बाधाबाधात् ॥५६॥

इदं रजतमिति पुरोवर्तिविषयतया सत्, अबाधनात्, रजतविषयतया त्वसत्, बाधात्। तस्मात्सदसती तत्त्वम् ॥५६॥

---

१. द्वयात्मविरुद्धत्वादिति गार्बे-पाठः।

२. व्यवहारिकमित्यपपाठः।

३. तत्त्वावेदन ( पाठा० )।

४. निर्वचनीयत्वाच्च ( पाठा० )।

स्फोटं निराकरोति--

**प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥**

प्रतीतिर्वर्णेषु, अप्रतीतिः स्फोटे। तस्मान्न स्फोटात्मकः शब्दः। यदि वर्णाः किंचिदपि न प्रतिपादयन्ति, स्फोटप्रतिपादनमपि कुतः? अथ प्रतिपादयन्ति, किमन्तर्गडुना स्फोटेन? वर्णा एव प्रतिपादकाः सन्तु। नानात्वादपि न स्फोटसिद्धिः ॥५७॥

प्रत्यक्षबाधाद्वेदस्यानित्यत्वमुक्तम्। वर्णानामनित्यत्वं प्रतिपादयति—

**न शब्दनित्यत्वं कार्यताप्रतीतेः ॥५८॥**

प्रत्यक्षादेः शब्दश्रवणानन्तरं नास्तीति प्रतीतेः, अन्यथा घटस्यापि नित्यत्वं स्यात् ॥५८॥

प्रकृतिपुरुषादन्यत्सर्वं कार्यमिति प्रतिपादनार्थं शङ्कते—

**पूर्वसिद्धसत्त्वस्याभिव्यक्ति दीपेनेव[1] घटस्य ॥५९॥**

यथान्धकारस्थो घटो दीपेनाभिव्यज्यते, तथा वर्णा ध्वनिभिर्व्यज्यन्ते। तदभावान्न सन्तीति प्रतिभानं न त्वसत्त्वात् ॥५९॥

समाधानमाह--

**सत्कार्यसिद्धान्तश्चेत्सिद्धसाधनम् ॥६०॥**

अभिव्यक्तिमाश्रित्य नित्यत्वमुच्यते, ततः सत्कार्यसिद्धान्तश्चेत्, सिद्धसाधनम् ॥६०॥

एक एव त्मा। तथा च—

---

१. प्रदीपेनेव (पाठा०)

सितनीलादिभेदेन यथैकं दृश्यते नभः।
भ्रान्तदृष्टिभिरेवात्मा[1] तथैकः सन् पृथक् पृथक्॥
( विष्णुपु० २।१६।२२ )

तन्निराकरोति—

**नाद्वैतमात्मनो[2]लिङ्गात्तद्भेदप्रतीतेः ॥६१॥**

जरामरणादि-लिङ्गनियमात्॥ पूर्वत्र सिद्धवदुक्तम्, इदानीं साध्यत इत्यपौनरुक्त्यम्॥६१॥

मा भूत्सजातीयाद्वैतम्। अनात्मानो भविष्यन्ति घटादयस्त्वात्मरूपा इति विजातीयाद्वैतं भविष्यतीत्यत्राह—

**नानात्मनापि प्रत्यक्षबाधात् ॥६२॥**

न अनात्मना घटादिना आत्मन एकत्वम्, घटादीनां बाह्यत्वेन भेददर्शनात्। एकत्वे घटादीनामात्मात्वमात्मनश्च परिणामित्वमिति ॥६२॥

सजातीयविजातीयाद्वैतं भविष्यतीत्यत्राह—

**नोभाभ्यां तेनैव ॥६३॥**

अबाधितप्रत्ययेनैव भेददर्शनात्॥६३॥

एवमद्वैतश्रुतिविरोध इत्यत्राह—

**अन्यपरत्वमविवेकानां तत्र ॥६४॥**

अविवेकानामज्ञानाम्। तत्र तच्छ्रुतेरन्यपरत्वं सामान्यपरत्वम्[3] ॥६४॥

---

१. 'भ्रान्तदृष्टिभिरात्मापि' इति मुद्रितपुराणपाठः।

२. लिङ्गाच्च भेदप्रतीतेः (पाठा०)।

३. अज्ञानां तच्छ्रुजतेरन्यपरत्वं सामान्यपरत्वम्।

एकात्मवादिनां जगदुपादान [1]कारणमपि नास्तीत्यत्राह—

**नात्माविद्या नोभयं[2] जगदुपादानकारणं निःसङ्गत्वात् ॥६५॥**

कूटस्थत्वान्नात्मा कारणम्। अविद्याया अस[3]त्यत्वान्न कारणत्वम्। सत्यत्वेऽद्वैतहानिः। संबन्धाभावान्नोभयं कारणम् ॥६५॥

चिदानन्दस्वरूप आत्मेत्यत्राह—

**नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥६६॥**

आनन्दः सुखम्। चित् ज्ञानम्। आनन्दचिद्रूपत्वे द्वैतत्वापत्तिः[4]। न च आनन्दो न विषयजं सुखं, चितिर्वा वृत्तिज्ञानम्, किंत्वन्यदेवालौकिकमिति वाच्यम्, अलौकिकत्वेनाप्रामाणिकत्वात्, प्रामाणिकत्वे प्रमाणसत्त्वेनैव द्वैतत्वम्। किं च, आत्मन आनन्दरूपत्वं आनन्दधर्मत्वं वा? आनन्दधर्मत्वे द्वैतत्वापत्तिः, निर्गुणत्वादिश्रुतिविरोधश्च। आनन्दरूपत्वे संसारावस्थायां कथमानन्दो नानुभूयते। अविद्यातिरोधानादिति चेत्, अमूर्तत्वादविद्याया न तया कुड्यवत्तिरोधानसम्भवः। अथाभिभवस्तिरोधानशब्दार्थः। नित्यस्य विभुनो नाभिभवः। अविद्याया मिथ्यात्वादात्मनः सत्यत्वान्नानयोः संबन्धः, वस्त्ववस्तुनोः सम्बन्धाभावात्, संबन्धे वा निःसङ्गादि-श्रुतिविरोधः। आनन्दानुभवे च कर्मकर्तृ-विरोधः। किं चानन्दात्मत्वे किं प्रमाणम्?

---

१. करणमपि (पाठा०)।

२. नात्मा नाविद्ये त महादेवः।

३. असत्त्वात्।

४. द्वैतापत्तिः (पाठा०)।

किं प्रमाणानुसरणेन स्वयमेव प्रमाणरूपत्वादात्मन इति चेत्, तन्न, प्रमाणव्यवस्थार्थं प्रमेयस्वीकारात्। प्रमेयाभावात्किं प्रमाणेन परिच्छेत्तव्यम्? प्रमित्युपधानाभावाच्च प्रमाणत्वमेव नास्ति। चिद्रूपत्वं च नानन्दरूपत्वम्, द्वयोर्भेदात्। तयोरलौकिकत्वेनाभेदसिद्धिरित्यपि न, अलौकिकत्वादेव व्याप्तिग्रहणाभावात्। ततो नात्मनो द्विरूपत्वमिति। यदि च मुक्तावानन्दो नानुभूयते, किं तेन। अनुभूयते चेत्, अनुभवित्रनुभवानुभवनीया वाच्याः। यथा च यावद्देभावित्वे नात्मसाक्षात्कारादपि समाधिरित्युच्यते, देहपातानन्तरमात्मनः स्थितिरिति क्व समाधिः? तथा च समाधौ सकलदुःखनिवृत्तेरानन्दलाभ इत्यभिमन्यते। देहाभावात्समाधिनाशे क्वानन्दानुभवः? एवं च मुक्तावानन्दानुभवो भ्रान्त इति ॥६६॥

अथानन्दश्रुतेः का वार्ता? तथा च--

आनन्दं ब्रह्मणो विद्वान्न[1] बिभेति कुतश्चन।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह[2] ॥

(तै० उप० २।४)

इत्यत्राह—

दुःखनिवृत्तेर्गौणः ॥६७॥

व्यक्तम् ॥६७॥

प्रकारान्तरमाह--

विमुक्तिप्रशंसा मन्दानाम् ॥६८॥

मन्दानां तामसानाम्। विमुक्तिप्रशंसा प्रवर्तनार्थं प्रोत्साहनमिति ॥६८॥

---

१. रूपं न (पाठा०)। २. उपनिषदि यतो वाचेत्यादिकं पूर्वं ततश्च आनन्दमित्यादिकं पठ्यते।

मनोवैभवं निराकरोति—

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च[1] ॥६९॥

यच्च 'शिरसि मे वेदना, पादे मे सुखमि'ति ज्ञानं मनसो विभुत्वं प्रतिपादयति, तदाशुसंचारित्वात्क्रमाग्रहणनिमित्तम्। नानेन विभुत्वसिद्धिः ॥६९॥

दूषणान्तरमाह—

सक्रियत्वाद् गतिश्रुतेः[2] ॥७०॥

सक्रियत्वादित्यनुमानं दर्शितम्। गतिश्रुतेरिति शब्दो दर्शितः ॥७०॥

अणुत्वेऽपि कारणाभावान्नित्यं भविष्यतीत्यत्राह—

न निर्भागत्वं तद्योगाद्घटादिवत्[3] ॥७१॥

न निर्भागत्वं नाकारणवत्त्वम्। तद्योगाद् भागयोगात्। किमस्य कारणम्? अहंकारः। षट्केन युगपद्योगात्परमाणूनां सभागत्वसिद्धिः। तस्माद् घटादिवदनित्यं मनः ॥७१॥

नित्यानित्यविभागमाह—

प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥७२॥

स्पष्टम् ॥७२॥

दिक्कालादीनां नित्यत्वात्कथं सर्वमनित्यमित्यत्राह—

---

१. वास्यादिवदित्याद्यंशो न भिक्षुनागेशसंमतः।

२. श्रुतेश्चेति महादेवः।

३. घटवदिति क्वचित् पठ्यते व्याख्यातृभिः।

**न भागलाभो भागिनो निर्भागत्वश्रुतेः ॥७३॥**

न कारणलाभो भागिनो जगत्कारणस्य प्रधानस्य, निर्भागत्वश्रुतेः 'मूलकारणत्वान्नास्य कारणान्तरमि' तिश्रुतेः[१] ॥७३॥

आनन्दाभिव्यक्तिर्मुक्ति रित्येतद् दूषयति--

**नानन्दाभिव्यक्तिर्मुक्ति र्निर्धर्मकत्वात्[२] ॥७४॥**

मुक्तौ धर्मधर्मिभावाभावाद् नाभिव्यक्तिः। सा किं सर्वदास्ति? संसारदशायामपि मुक्तिप्रसङ्गः। अथ मुक्तौ क्रियते? कार्यस्यावश्यं नाशात्पुनरनिर्मोक्ष इति ॥७४॥

विशेषगुणोच्छित्तिर्मोक्ष इति दूषयति--

**न विशेषगुणोच्छित्तिस्तद्वत् ॥७५॥**

विशेषनिषेधात्सामान्यगुणस्वीकारः। तथा च गुणयोगाद निर्मोक्षः ॥७५॥

देहपरिमाण आत्मा, तस्य देहमात्राद् गतिरेव मुक्तिरिति। तद्दूषयति—

**न विशेषगति र्निष्क्रियस्य ॥७६॥**

नोर्ध्वगत्या मुक्तिः, 'निर्गुणनिष्क्रियनिर्धर्मक आत्मे' तिश्रुतेः[३] कुतो मुक्तिः? हस्तिकृमिदेहपरिणामित्वेन संकोचविकाशाभ्यां सावयवत्वेनानित्यश्च स्यात् ॥७६॥

बौद्धमुक्तिं दूषयति—

---

१. इदं श्रुत्यर्थमूलकं वचनमिति प्रतिभाति।

२. निर्धर्मत्वादित्यन्ये पठन्ति।

३. इदं श्रौतं मतं, न पुनः श्रौतं वाक्यम्।

**नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥७७॥**

स किमाकारो ज्ञानस्वरूपः ? तथा च ज्ञानस्याप्युच्छेद इति कस्य मुक्तिः ? अथ धर्मः । क्षणिकत्वात्सर्वदा तन्नाशे संसारिणामपि मुक्तिः स्यात् । अथ वासनावशात्तदा न मुच्यते, वासनोच्छित्तिरेव मोक्षोऽस्तु किमाकारोपरागोच्छित्त्या ? आदिशब्दात्स्वच्छसंवित्प्रवाहस्यापि नश्वरत्वात्कस्य मुक्तिरिति ॥७७॥

बौद्धविशेषस्य[1] मुक्तिं दूषयति—

**न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥७८॥**

स्पष्टम् ॥७८॥

शून्यं मुक्तिरिति दूषयति—

**एवं शून्यमपि ॥७९॥**

अपुरुषार्थत्वादेः । आदिशब्दादनुष्ठानाभावः सूचितः । यद्यात्मा स्वीक्रियते, तदा तत्परिपन्थिनि द्वेषः, तदनुकूले च स्नेह इति तयोर्बन्धहेतुत्वादनिर्मोक्षः स्यात् । नैवम् । नहि रागद्वेषमात्राद् बन्धः, किंतु तद्विशेषात् । यथा बौद्धपक्ष एव न संवित्संतानमात्राद् बन्धः, स्वच्छसंवित्संतानस्य मोक्षाङ्गत्वात्, तथा कैवल्यात्मपरिपन्थिनि द्वेषान्निरुपहितात्मस्थितौ रागान्न बन्धः, प्रत्युत मोक्षहेतुत्वमेवेति ॥७९॥

कालदेशकर्मविशेषान्मुक्तिरिति । तद् दूषयति—

१. बौद्धविषयस्येत्यपपाठः ।

**संयोगाश्च वियोगान्ता इति[1] न देशादिलाभोऽपि ॥८०॥**

देशसंयोगस्य वियोगान्तत्वात्पुनः संसारः। आदिशब्दात्कालकर्मणोरपि परिग्रहः। कालयोगस्याप्येवम्। कर्मणश्च क्षयित्वात्पुनः संसार इति ॥८०॥

भागस्य जीवात्मनो भागिनि ब्रह्मणि योगो मुक्तिरिति। तद् दूषयति---

**न भागयोगो[2] ऽभागस्य ॥८१॥**

न ब्रह्मणो भागो जीवात्मा, ब्रह्मणो भागाभावात्। योगस्य वियोगान्तत्वात्पुनर्बन्धप्रसङ्गः। अथ संसारकारणाभावान्न वियोग इति, एवं स एवास्तु, किं भागयोगकल्पनया ॥८१॥

अणिमादिसिद्धिरेव मुक्तिरित्यत्राह---

**नाणिमादियोगोऽप्यवश्यंभावि[3]त्वात्तदुच्छित्तेरितरवि[4]-योगवत्[5] ॥८२॥**

तेषामपि कार्यत्वादनित्यत्वम्। आदिशब्दाल्लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्वमिति ॥८२॥

परमैश्वर्यपदप्राप्तिरेव मुक्तिरित्यत्राह--

---

१. अत्र इतिपदं हेत्वर्थकम्; यद्वा 'संयोगाश्च वियोगान्ताः' इति वाक्यस्याचार्यन्तरप्रोक्तत्वं सूचयति। संयोगाश्च वियोगान्ता इति वाक्यम् इतिहासे पुराणे स्मृतिषु च असकृत् पठ्यते।

२. न भागियोगो भागस्येति विज्ञानादयः।

३. अवश्यं भावितत्वात् (पाठा०)।

४. तदुच्छित्तिः (पाठा०)।

५. इतरयोगवदिति विज्ञानादयः।

नेन्द्रादिपदयोगोऽपि तद्वत् ॥८३॥

अनित्यत्वात् ॥८३॥

केचिद् भौतिकानीन्द्रियाणीति । तन्निरस्यति--

न भूतप्रकृतित्वमिन्द्रियाणामाहं[1]कारिकत्वश्रुतेः ॥८४॥

तथा च—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥
(मुण्डक० २।१।३)

भूतप्रकृतित्वमिति तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानाद् व्यपदेशः ।८४॥

षट्पदार्थज्ञानान्मुक्तिरित्यत्राह--

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः[2] ॥८५॥

"द्रव्यगुणकर्मसामान्यविशेषसमवाया इति । तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति द्रव्याणि । रूपरसगन्धस्पर्शाः संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा गुणाः । उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणि । परमपरं च सामान्यम् । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अयुतसिद्धानां यः संबन्ध इह प्रत्ययहेतुः स समवायः" इति[3] नास्ति नियमोऽनियतपदार्थवादित्वात्सांख्यानाम् । न च तद्बोधान्मुक्तिः, आत्मज्ञानादेव मुक्तेः ॥८५॥

---

१. अहंकारत्वेति पाठः प्रामादिकः ।

२. मुक्तिश्चेत्यन्येषां पाठः ।

३. इमानि वचांसि वैशेषिकसूत्रप्रतिष्ठितानि (द्र० १।१आह्निक) ।

षोडशपदार्थज्ञानान्मुक्तिरित्यत्राह—

षोडशादिष्वप्येवम् ॥८६॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयम्। समानानेकधर्मोपपत्ते र्विप्रतिपत्ते रुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। स चतुर्विधः, सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः। विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः। यथोक्तोपपन्नःछलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रतिपक्षस्थापनाहीनो वितण्डा। सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः। वचनविघातोऽर्थविकल्पोपपत्त्या छलम्। तत् त्रिविधं, वाक्छलं सामान्यच्छलमुपचारच्छलं च। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणम

ज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि"।[1] इयन्त इति न नियमः, न वा तद्बोधान्मुक्तिः। आदिशब्दादन्येऽपि नियतपदार्था निराकार्याः ॥८६॥

नित्याश्चतुर्विधाः परमाणवः, तैरेव महाभूतारम्भात्किं प्रधानेनेत्यत आह--

**नाणुनित्यता तत्कार्यत्वश्रुतेः ॥८७॥**

"प्रधानात्सर्वमजायत," "प्रकृतिपुरुषादन्यत्सर्वमनित्यमिति"श्रुतेः[2] कार्यत्वात्परमाणूनां न नित्यत्वं कारणत्वं वा ॥८७॥

एवं च परमाणुत्वमेव न भवतीत्याह—

**न तन्निर्भागत्वं[3] कार्यत्वात् ॥८८॥**

निर्भागत्वं निरवयवत्वम्। यत्कार्यं न तन्निर्भागि, यथा पट इति ॥८८॥

उद्भूतरूपवत्त्वाच्च प्रत्यक्षमित्यत आह--

**न रूपनिबन्धनात्प्रत्यक्षत्वनियमः[4] ॥८९॥**

'इहायं पक्षी' त्याकाशस्य प्रत्यक्षत्वाद् व्यभिचारादुद्भूतरूप-

---

१. इमानि वचांसि न्यायसूत्रप्रतिष्ठितानि १।१-२ आह्निके मुख्यतः द्रष्टव्यानि।

२. इमे वचसी न श्रुतिवाक्ये, प्रत्युत श्रुत्यर्थमूलके इति ज्ञेयम्। त्रिगुणोऽसौ महाज्ञातः प्रधान इति वै श्रुतिरिति शान्तिपर्ववाक्ये प्रधानस्य श्रौतत्वं दर्शितम्।

३. न निर्भागत्वमित्यन्येषां पाठः।

४. प्रत्यक्षनियम इति विज्ञाननागेशौ ?

निबन्धनान्न प्रत्यक्षत्वनियमः। अलौकिके च समाधिबलजे योगिप्रत्यक्षे न पर्यनुयोगो ऽस्ति ॥८९॥

अणु महद्दीर्घं ह्रस्वमिति चतुर्विधं परिमाणं नास्तीत्याह--

**न परिमाण[1]चातुर्विध्यं द्वाभ्यां तद्योगात् ॥९०॥**

महदणुभ्यां कार्यकारणयोगाद्व्यवहारसिद्धेः। एतत्प्रभेदा एवान्ये परिमाणभेदा इति ॥९०॥

प्रकृतिपुरुषव्यतिरिक्तं सामान्यं नित्यमस्तीत्याह--

**अनित्यत्वे ऽपि स्थिरतायोगात्प्रत्यभिज्ञानं सामान्यस्य ॥९१**

यथा 'सो ऽयं देवदत्त' इति न सामान्यविषया प्रत्यभिज्ञा, तथा ऽनित्यत्वे ऽपि सामान्यस्य बहुकालस्थैर्याज्ज्वालादिषु[2] प्रत्यभिज्ञानमिति ॥९१॥

सामान्यारूपत्वं निराकरोति--

**न तदपलापस्तस्मात् ॥९२॥**

न सामान्यापलापः, प्रत्यभिज्ञानात् परोक्तयुक्तेः प्रत्यक्षबाधात् ॥९२॥

अस्त्येकाकारा बुद्धिः, सान्यनिवृत्तिपरेत्यत्राह[3]--

**नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥९३॥**

अभावरूपत्वे प्रतियोगिस्मरणाधीनं ज्ञानं लभ्येत, न तु विधिमुखतयेति ॥ तथा च--

---

१. परिमाणे ( पाठा० )। २. ज्ञानादिषु ( पाठा० )।
३. सामान्यनिवृत्तीति भ्रष्टः पाठः।

सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते।
गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः ॥९३॥
( श्लोकवार्त्तिक अपोहवाद, ८३ श्लोक )

सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यतीत्यत आह—

**न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥९४॥**

भूयोऽवयवसामान्ययोगः सादृश्यं न तत्त्वान्तरम्, प्रत्यक्षेणैव बहुतरतथा[1]वयवग्रहणात् 'तत्सदृशोऽयमि'ति ज्ञानोत्पादात् ॥९४॥

प्रकारान्तरमाह--

**निजधर्माभिव्यक्ति[2]र्वा वैशिष्ट्यात्तदुपलब्धेः ॥९५॥**

अस्ति पदार्थानां निजा शक्तिः। सा तुल्यपिण्डान्तरदर्शनादभिव्यक्ता विशिष्टा सती 'सदृशोऽयमि' ति सादृश्योपलब्धेः कारणम्, न तु तत्त्वान्तरं सादृश्यम् ॥९५॥

संज्ञासंज्ञिसंबन्धज्ञानहेतुः सादृश्यमिति तत्सिद्धिरित्यत्राह-

**न संज्ञासंज्ञि[3]संबन्धोऽपि ॥९६॥**

न संबन्धज्ञानहेतुः सादृश्यं व्यभिचारात्, अन्यत्र व्युपदेशादेः संज्ञासंज्ञिसम्बन्धनिश्चयात्। करणव्युत्पत्त्या विषयिणो ज्ञानस्योपलक्षणम् ॥९६॥

शब्दार्थयोर्नित्यः संबन्ध इति निरस्यति—

**न संबन्धनित्यतोभयानित्यत्वात् ॥९७॥**

शब्दार्थयोरनित्यत्वात्कथं संबन्धो नित्यः स्यात्? ॥९७॥

---

१. बहुतराल्पावयव ( पाठा० )।

२. निजशक्त्यभिव्यक्तिरिति विज्ञानादयः।

३. संज्ञासंज्ञिनो ( पाठा० )।

अजसंबन्धमपाकरोति--

**नाजः संबन्धो धर्मिग्राहकप्रमाण[1]बाधात् ॥९८॥**

संयोगो भवन्कर्मजो भवेत्, न च नित्यस्य व्यापकस्य क्रियास्ति। महदादयश्चानित्याः, कथं तत्संयोगो नित्यः स्यात्? आत्मनां च निर्धर्मकत्वान्न तैः प्रधानेन संयोगोऽस्ति। किं च येन प्रमाणेन वस्तु गृह्यते तेनैव संयोगग्रहणमिति धर्मि-ग्राहकप्रमाणबाधः ॥९८॥

समवायं निरस्यति--

**न समवायोऽस्ति प्रमाणाभावात् ॥९९॥**

समवायः संबद्धोऽसंबद्धो वा। असंबद्धत्वे कथमन्यं संबन्धिनं कुर्यात्? असंबद्धत्वेऽन्यसंबन्धस्यासंभवात् समवाय एव वक्तव्यः, तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थानान्नास्ति समवायः। यस्त्वविभागेन प्रतिभासः, स संयोगविशेषवैचित्र्यात्, यथा तप्तायःपिण्डे वह्निः ॥९९॥

यदि समवायो नास्ति, कथं शुक्लः पट इति अश्वो गच्छतीति गौरोऽसिमिति ज्ञानमित्यत्राह--

**उभयत्राप्यन्यथासिद्धेः[2] न प्रत्यक्षमनुमानं वा ॥१००॥**

उभयत्रापि तादात्म्येनैवोपपत्तेः, अन्यथा सामानाधि-करण्यं न स्यादिति ॥१००॥

अनुमेया क्रिया स्यादित्यत्राह—

---

१. मानबाधात् ( पाठा० )। २. नेति किंचन्न।

**नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्ष-प्रतीतेः[१] ॥१०१**

निकटस्थस्य क्रिया-क्रियावतोरेवापरोक्षप्रतीतेः। अन्यथा सिद्धस्य प्रत्यक्षस्य बाधाद्। यदि संयोगविभागाभ्यां कर्मानुमीयते, तयोरुभयवृत्तित्वाद् वृक्षमूलादग्रं गच्छति पुरुषे वृक्षेऽपि कर्मानुमीयेत। ननु पुरुषकर्मणा संयोगविभागसिद्धौ किमर्थं वृक्षे कर्म स्वीकर्तव्यम्? इत्युक्तौ भवेदेवम्, अव्यभिचारात्तु संयोगविभागाभ्यां वृक्षे कर्मानुमानं न निवर्तते; किंच अन्धकारे[२] 'भुजाग्रं मे कम्पते' इत्यादौ कम्पनमात्रज्ञानं भ्रान्तिः। सूर्यक्रियानुपलम्भश्चातिदूरादिदोषात् ॥१०१॥

पञ्चभूतारब्धं शरीरमित्यत्राह—

**न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥१०२॥**

बहूनां भिन्नजातीयानाम्। उपष्टम्भकत्वे तु चतुर्णां निमित्तत्वमस्त्येव। तेन च पाञ्चभौतिकत्वमुच्यत इति ॥१०२॥

नास्ति सूक्ष्मशरीरं प्रमाणाभावादित्यत्राह—

**न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥१०३॥**

मनसो निराश्रयस्य गत्यभावान्मरणे देहप्राप्तये मनस आश्रयो वक्तव्यः। स एवातिवाहिकं सूक्ष्मशरीरमिति। श्रुतिरपि[३] 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः' (वनपर्व २९७। १७)।

---

१. नागेशमते सूत्रे द्वौ एवकारौ न स्तः।

२. किं चानुकारे इत्यपपाठः।

३. इदं न श्रुतिवचनं, प्रत्युत महाभारतवचनम्।

पुरि स्थूलशरीरे शेत इति पुरुषः सूक्ष्मदेहः ॥१०३॥

अप्राप्तप्रकाशकमिन्द्रियं दूरे शब्दोपलम्भात् काचाभ्रस्फटिकान्तरितोऽपलब्धेश्चेत्यत्राह[1]—

**नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥१०४॥**

नाप्राप्तार्थप्रकाशकत्वं यत्प्राप्तप्रकाशकत्वम्। श्रोत्रं वृत्तिद्वारेण शब्देन सह संबध्यते। काचादयस्तु स्वच्छत्वान्न चक्षुःप्रसारं प्रतिबध्नन्ति। दूरे च वृत्तिद्वारेण वस्तुग्रहणम्। यद्यप्राप्तेर्न गृह्णाति, कुड्यव्यवहितवद् दूरत्वेनाप्राप्तेरविशेषाद्व्यवहितमपि न गृह्येतेति। अथाप्राप्तेरपि गृह्णाति। अविशेषाज्जगदुदरवर्ति सर्वं गृह्णीयादिति ॥१० ॥

यदि प्रसारि चक्षुः, तैजसं तर्हीत्यत्राह—

**न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥१०५॥**

तैजस इवापसर्पणाद् दूरेऽपि प्रकाशकत्वात्तैजसमित्यभिमानः। वस्तुनस्तु वृत्तिद्वारेण संबन्धात् तत्सिद्धेः प्रमेयसिद्धेः ॥१०५॥

अथ वृत्तेरप्रत्यक्षत्वात् कथं वृत्तिसिद्धिरित्यत्राह—

**प्राप्तार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः ॥१०६॥**

व्यक्तम् ॥१०६॥

वृत्तिः किं दीपज्वालेव भागरूपा गुणान्तरं वेत्यत्राह—

**भागगुणाभ्यां तत्त्वान्तरं वृत्तिः संबन्धार्थं सर्पतीति[2] ॥१०७॥**

कार्यानुमेया वृत्तिस्तत्त्वान्तरमाहंकारिकम्, अनियतः

---

१. स्फटिकान्तरोपलब्धेः ( पाठा० )।

२. सर्पयतीति ( पाठा० )।

पदार्थौ यतः। असंबद्धस्य ज्ञानायोगात् तदर्थं सर्पति। तथा च—

वृत्तयः प्रसरद्रूपाः स्फारितात्तस्य[1] यत्र च।
अदृष्टानुग्रहात्तत्र संबद्धार्थावबोधिकाः ॥१०७॥

कथममूर्ताया वृत्तेः सर्पणक्रियेत्यत्राह—

**न द्रव्ये[2] नियमस्तद्योगात् ॥१०८॥**

अनियतत्वात्पदार्थानां न द्रव्य एव क्रियानियमः, किं तु यत्र प्रमाणं दृश्यते तदनुमन्यामहे। वृत्तौ च क्रिया दृष्टा, अन्यथा वस्तूपलम्भाभावात् ॥१०८॥

देशभेदे भौतिकानीन्द्रियाणि भविष्यान्ति, यथा वृश्चिकदष्टस्य देशभेदे मरणमित्यत्राह—

**न देशभेदे ऽप्यन्योपादानतास्मदादि[3] वन्नियमः ॥१०९॥**

स्वशरीर एव व्याप्तिर्गृहीता—आहंकारिकाणीन्द्रियाणीति। तद्व्यभिचारे धूमो ऽप्यग्निं व्यभिचरेत् ॥१०९॥

पाञ्चभौतिकमिति व्यपदेशे हेतुमाह—

**निमित्तव्यपदेशात्तद्व्यपदेशः ॥११०॥**

पञ्चोपादानता निषिद्धा, न निमित्तता। तेन पाञ्चभौतिकमिति व्यपदेशः ॥११०॥

**ऊष्मजाण्डजजरायुजोद्भिज्जसंकल्पजसांसिद्धिकं[4] चेति न नियमः ॥१११॥**

ऊष्मजो दन्दशूकादिः। अण्डजाः पक्षिसर्पादयः। जरायुजो

---

१. स्फुरितात्तस्य ( पाठा० )। २. द्रव्यनियम इति विज्ञाननागेशौ।
३. अस्मदादावित्र नियम इति नागेशः।
४. सांकल्पिके त्यपरे पठन्ति।

मनुष्यादिः। उद्भिज्जा वृक्षादयः। संकल्पजो मन्वादिः। सांसिद्धिको मन्त्रौषधादिसिद्धः। चत्वार्येवेति न नियमः ॥१११॥

देहे किं भूतं प्रधानमित्यत्राह—

**सर्वेषु पृथिव्युपादानमसाधारण्यात्तद्व्यपदेशः पूर्ववत् ॥११२॥**

सर्वेष्विति बाहुल्येन, "सूर्यादिलोके तैजसं शरीरमि" तिश्रुतेः[१]। तत्रापि बहुतरपार्थिवावयवावष्टम्भकत्वम्, अल्पत्वे चानुपभोगात्। पूर्ववदिति सर्वमेवोक्तम् ॥११२॥

देहे प्राणदर्शनात्तस्य देहारम्भकत्वशङ्कामपनयति—

**न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥११३॥**

भौतिकवायोर्देहारम्भकत्वम्, न तु प्राणवायो भौतिकत्वम्, "प्राणात्सर्वमजायते" ति[२]श्रुतेः। यावद्देहभावित्वे चारम्भकत्वभ्रमः। सर्वेन्द्रियशक्त्या प्राणो धार्यत इति यावदिन्द्रियं तावत्तत्सिद्धिः प्राणधारणसिद्धिः ॥११३॥

देहे निष्पन्ने आत्माधिष्ठानम्[३], आत्माधिष्ठिते वा देहनिष्पत्तिरिति निर्णयमाह—

**भोक्तुरधिष्ठानाद् भोगायतननिर्माणमन्यथा पूतिभावप्रसक्तेः[४] ॥११४॥**

स्फुटम् ॥११४॥

---

१. श्रौतं मतमत्र दर्शितं न पुनः श्रौती आनुपूर्वी।

२. श्रौतमतपरमिदम्, प्रश्नश्रुतौ प्राणस्य सर्वमूलत्व मुक्तम्।

३. आत्माधिष्ठानमितिक्वचिन्न पठ्यते।

४. प्रसङ्गः, प्रसंगात् इत्यन्ये पठन्ति।

प्रधानमलत्वाच्छरीरस्य तद्द्वारेणैवाधिष्ठानं भविष्यतीत्यत्राह—

**भृत्यद्वारा[1] स्वाम्यधिष्ठितिर्नैकान्तात् ॥११५॥**

जडे भृत्येऽवलम्बिनी सर्वत्र स्वस्थितिर्यथा, तथा जडस्य प्रधानस्याधिष्ठानान्न पूतिभावविरोधः ॥११५॥

ब्रह्मरूपनिरूपणायान्येषां तुल्यरूपमाह—

**समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥११६॥**

[2]ब्रह्मणा सह तुल्यरूपता, सर्वत्र बाह्यासंवेदनात्, न तु ब्रह्मरूपता ॥११६॥

ब्रह्मणः स्वरूपमाह--

**द्वयोः सबीजत्व[3] मन्यस्य तद्धानिः[4] ॥११७॥**

द्वयोः समाधि-सुषुप्त्योः सबीजत्वं संस्कारवत्त्वम्, अन्यस्य मोक्षस्य बीज[5]हानम् ॥११७॥

समाधि-सुषुप्त्योर्दृष्टा निरुद्धवृत्तिकत्वात्कृतकृत्यता, न तु मोक्षस्येत्यत्राह--

**द्वयोरिव त्रयस्यापि[6] दृष्टत्वान्न तु द्वौ ॥११८॥**

त्रयस्यापि मोक्षस्यापि दृष्टत्वात् श्रुत्यनुमानप्रतिपादना-

---

१. भृत्यवर्गद्वारा (पाठा०)।

२. क्वचिदत्र वृत्तौ विज्ञानभाष्यं संयोजितम्-समाधिरसंप्रज्ञातावस्थेत्यादिना।

३. सबीजम् (पाठा०)। ४. तद्धतिः (पाठा०)।

५. तद्धानिः सबीजत्वहानिः संस्कारहानमित्यर्थः इत्यधिकं क्वचित्।

६. अपीति न महादेवसंमतः पाठः।

त्कृतकृत्यता, न तु द्वौ सुषुप्तिसमाधी। सबीजत्वात्तयोः कृतकृत्यता गौणीति ॥११८॥

रागादीनां बन्धहेतुत्वात् किं वासनयेत्यत आह--

**वासनयानर्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥११९॥**

न दोषादेव बन्ध इति वक्तव्यम्। वासनयानर्थख्यापनमवश्यं कर्तव्यम्। दोषाणामेव निमित्तस्य प्रधानस्य मुक्तौ बाधकत्वं वक्तव्यम्। मुख्यं च वासनेति ॥११९॥

इष्वादिक्षेपे वेगाख्यात्संस्कारात्कर्म, कर्मणा च संस्कार इत्यनेके संस्काराः। तन्निषेधति--

**एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥१२०॥**

एकसंस्कारपक्षे इषोर्निपात[1] इत्युक्तम्। परिणामपक्षे च एकस्यैव मन्दतरादि-परिणामात्पात इति बहुकल्पनायां गौरवमिति ॥१२०॥

एको विषयः, यत एका बुद्धिः, सत्सदिति प्रत्ययस्याविशेषादित्यत आह--

**न बाह्यबुद्धिनियमः[2] ॥१२१॥**

यथा सदिति प्रत्ययोऽबाधितः, तथा घटपटादि-प्रत्ययोऽपि।

---

१. इषोर्न पातः, इषोर्ना पातः, नृपात इत्यपपाठाः; अत्र इषावयुगपत् इति वैशेषिकसूत्रमनुसन्धेयम् (५।१।१६)।

२. विज्ञानेन सूत्रमिदं परवर्तिसूत्रेण सहैव व्याख्यातं सूत्रपाठभेदविषये निर्देशोऽपि दत्तः।

सदिति प्रत्ययश्च सामान्यविषयः। तस्मान्न बाह्यबुद्धावेकस्यैवेति नियमः ॥१२१॥

पाञ्चभौतिकं जीवशरीरम्। कतिभूतारब्धं स्थावरमित्यत्राह--

**वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ॥१२२॥**

पूर्ववदिति भोगायतनत्वात्पाञ्चभौतिकम्। भोगायतनत्वं च जन्मान्तरीयक्रियाविशेषात्। 'जीवात्मान एव स्थावराश्रयतामुपगच्छन्ती' ति श्रुतेः[1] ॥१२२॥

अत्र स्मृतिरप्यस्तीत्याह--

**स्मृतेश्च ॥१२३॥**

व्यक्तम्। तथा च—

अभिवादितश्च यो विप्र आशिषं न प्रयच्छति।<br>श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः[2] ॥<br>शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।<br>वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥

(मनु १२।९) ॥१२३॥

वृक्षादीनां देहत्वे कर्माधिकारिता स्यादित्यत आह—

---

१. श्रौतमतपरमिदं वाक्यम्।

२. अनुपलब्धमूलमिदम्। स्मृतिमुक्ताफलधृतयमस्मृतौ तु पठ्यते- "अभिवादे कृते यस्तु तं विप्रं नाभिवादयेत्। श्मशाने जायते वृक्षो गृध्रकाकोपसेवितः" (प्रथम खण्ड, पृ०११२)।

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥१२४॥

जीवदेहा अपि चण्डालादयो न कर्माधिकारिणः, किं पुनः स्थावरा इति, विशिष्टदेहस्य कर्माधिकारित्वात् ॥१२४॥

देहभेदमाह—

त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोग-
देहोभयदेहाः ॥१२५॥

वीतरागाणां फलसंन्यासेन कर्मकरणात्कर्मदेहः। पश्वा-दीनामुपभोगदेहः। भोगिनां कर्माधिकारिणां कर्मोपभोग-देहः ॥१२५॥

चतुर्थमनधिकारिण[1] देहमाह—

न किंचिदप्यनुशयिनः ॥१२६॥

'विद्यादनुशयं द्वेषे पश्चात्तापानुबन्धयोः' (शाश्वतः ३२० श्लोक) इति। अनुशयिनो योगिनो न किंचिदपि सर्वानधिकारात् ॥१२६॥

नित्यां बुद्धिं निराकरोति—

न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥१२७॥

व्याप्तिस्वरूपस्य व्यभिचारे सर्वत्रानाश्वासः। तथा चाश्रय-विशेषे चन्दनप्रभवस्य वह्नेरनुष्णत्वम् स्यात् ॥११७॥

---

१. अधिकारिणम् ( पाठा० )।

आश्रयासिद्धेश्च ॥१२८॥

ईश्वरस्यासत्त्वात्, आत्मनां च धर्माभावात्, प्रकृतिधर्माणां परिणामित्वात्, महदादीनामनित्यत्वात्। न चानित्याश्रया धर्मा नित्या भवितुमर्हन्ति, तस्मान्नित्यबुद्धेराश्रयो नास्ति ॥१२८॥

मणिमन्त्रौषधितपःप्रभावात्सिद्धिर्दृष्टा, न तु योगसिद्धयो दृष्टा इत्यत्राह—

योगसिद्धयो ऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥१२९॥

अणिमादिसिद्धि-कायव्यूह-परपुरप्रवेशादयो दृष्टाः, ते च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्यो ऽसंभवन्तो योगमेवावलम्बन्त इति नापलपनीयाः ॥१२९॥

पृथग्भूतानां चैतन्यादर्शने ऽपि संहताः शरीरभावमापन्नाश्चेतयिष्यन्तीत्यत्राह—

न भूतचैतन्यं प्रत्येकादृष्टेः[1] सांहत्ये[2] च
सांहत्ये च ॥१३०॥

यस्य स्वल्पा शक्तिरस्ति, तस्य समुदायान्महच्छक्ति र्जायते। यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद् गजबन्धनशक्तिर्दृश्यते।

---

१. प्रत्येकानुपलब्धे रिति पाठो गार्बेसंस्करणे दृश्यते, वृत्तौ तु अनुपलब्धिशब्दो न पठ्यते, प्रत्युतादृष्टिशब्द एव।

२. क्वचित् सांहत्ये ऽपि चेति पठ्यते।

न तथा भूतानां पृथक् चैतन्यं दृष्टं येन सांहत्ये चैतन्योद्भवः स्यात्। संहतत्वाविशेषान्मृतदेहस्यापि चैतन्यप्रसङ्गः। तस्मादन्य एव चेतनः। उक्तमप्यर्थं प्रसङ्गानुप्रसङ्गेन व्यवहित-मिति स्मारितम्, तेन न पुनरुक्तम्। सांहत्ये चेति वीप्साध्याय-परिसमाप्तौ ॥१३०॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
परपक्षनिर्जयाध्यायः पञ्चमः।

## षष्ठः तन्त्रार्थसंक्षेपाध्यायः

सकलशास्त्रार्थे कथिते परपक्षनिर्जयानन्तरं तमेवार्थं संकलय्य तन्त्रन्यायेन वक्तुं षष्ठाध्यायारम्भः ।

**अस्त्यात्मा नास्तित्वसाधनाभावात् ॥१॥**

स्पष्टम् ॥१॥

सामान्येनात्मन्यविप्रतिपत्तेस्तद्विशेषनिरूपणायाह—

**देहादिव्यतिरिक्तोऽसौ[1] वैचित्र्यात् ॥२॥**

देहाभेदपक्षे बाल्य-कौमार-यौवन-वार्द्धक-देहभेदादनेकात्मत्व-प्रसङ्गः, मृते देहनाशात् तस्य जन्मान्तरवैचित्र्यानुपपत्तिः । श्रुतिश्च "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ( श्वेताश्वतर ३ । १६ ) ।

हेत्वन्तरमाह—

**षष्ठीव्यपदेशादपि ॥३॥**

मम देह इति ज्ञानमस्ति, भेदे च षष्ठी श्रूयते। स्थूलोऽहमिति सामानाधिकरण्यमस्तीति चेत्, न देहे प्रत्युपभोगात्तन्निमित्तोऽयं गौणः प्रत्ययः ॥३॥

शिलापुत्रस्य शरीरमित्यभेदेऽपि षष्ठीश्रुतेर्न भेद इत्यत्राह—

---

१. असाविति न सर्वे पठन्ति ।

न शिलापुत्र[1]वद्धर्मिग्राहकमानबाधात् ॥४॥

न, तत्र प्रत्यक्षेणैवाभेदप्रतीतेः षष्ठी बाधितेति गौणः प्रयोगः। मुख्यसम्भवाद् गौणोऽत्र नास्तीति ॥४॥

सुखोत्कर्षात् कृतकृत्यता स्यादित्यत्राह—

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥५॥

सुखोत्कर्षस्यापि क्षयित्वाद् न कृतकृत्यता। अत्यन्तदुःखनिवृत्तिस्तु तथा अपुनरावृत्तेः ॥५॥

सुखाभावस्यापि विद्यमानत्वात् पुरुषार्थत्वमित्यत्राह—

यथा दुःखात् [2]क्लेशः पुरुषस्य न तथा सुखादभिलाषः ॥६॥

सुखे दुःखस्यावश्यम्भावात्। यदि सुखे सति दुःखमवश्यम्भवेत्, कस्तर्हि सुखमभिलषेत्? तस्माद् दुःखबहुलत्वात् सुखस्य दुःखनिवृत्तिरेव पुरुषार्थः ॥६॥

सुखस्य हेयत्वमाह—

कुत्राऽपि कोऽपि [3]सुखीति ॥७॥

स्वयमेव चिन्त्यताम् ॥७॥

प्रत्यक्षमेव वनितादीनां सुखहेतुत्वमित्यत्राह—

---

१. पुत्रकेति महादेवः।

२. द्वेष इति महादेव-नागेशौ।

३. क्वचित् सुखी नेति पठ्यते। न कुत्रापि कोऽपि सुखीति अन्येषां पाठः।

**तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते[1] विवेचकाः ॥८॥**

स्रगादीनामर्जने क्षयादौ च दुःखमिति स्वसंवेदनमेव प्रमाणमिति ॥८॥

सुखमेव परमपुरुषार्थो न त्वभाव इत्यत्राह—

**सुखलाभाभावादपुरुषार्थत्वमिति[2] चेन्नैवं द्वैविध्यात् ॥९॥**

रागिणां सुखं वीतरागाणां दुःखाभाव इति ॥९॥

विशेषगुणोच्छित्तिर्मुक्तिरित्यत्राह—

**निर्गुणत्वमात्मनोऽसङ्गा[3]दिश्रुतेः ॥१०॥**

विशेषगुणनिषेधात् सामान्यगुणस्वीकारः। तथा च असङ्गादिश्रुतिविरोधः (द्र० बृहदा० ४।३।१५) स्यात् ॥१०॥

यद्यसङ्गः पुरुषः, कथं धर्मात् स्वर्गोऽधर्मान्नरकम् इत्यत्राह—

**परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥११॥**

परधर्मत्वेऽपि प्रकृतिधर्मत्वेऽपि प्रकृतिपुरुषविवेकात्तच्छायापत्त्यात्मनः स्वर्गादिप्राप्तिरित्यभिमानः ॥११॥

अविवेकः किं सादिरनादिर्वेत्यत्राह—

**अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥१२॥**

यदि सादिरविवेको भवेत्, तदुत्पत्तेः पूर्वं मोक्षः स्यात्, तदुत्पत्तौ च बन्ध इति मुक्तस्यापि बन्ध इत्येको दोषः। अविवेकप्रागभावस्यापि विद्यमानत्वान्मुक्तिसिद्धावविवेकनाशार्थमनुष्ठानं व्यर्थमिति द्वितीयो दोषः ॥१२॥

---

१. निक्षिपन्तीति महादेवः, निःक्षिपन्त इत्यपि क्वचित्।

२. पुरुषार्थम् (पाठा०)।

३. असंगत्वादिश्रुतेरिति भिक्षुपाठः। असंगत्वश्रुतेरिति नागेशः।

**न नित्यः[1] स्यादात्मवदन्यथानुच्छित्तिः[2] ॥१३॥**

नित्यो द्विधा, कूटस्थनित्य आत्मा, परिणामिनित्या प्रकृतिः। न द्वयमप्यविवेकः, किन्त्वनित्य एव नाशात्। अन्यथा नित्यत्वेऽनुच्छित्तिः। आत्मवदित्युपलक्षणम्, प्रकृतिवदित्यपि द्रष्टव्यम् ॥१३॥

अविवेकनाशः केनेत्यत्राह—

**प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥१४॥**

यथा ध्वान्तस्य नाशकः प्रकाश इति ॥१४॥

अत्र को नाशक इत्यत्राह—

**अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥१५॥**

अव्यभिचाराद्विवेक एव नाशक इति ॥१५॥

किमविवेकाद् बद्ध आत्मा, अथान्यदपि बन्धकारणमस्तीत्यत्राह—

**[3]प्रकारान्तरासम्भवादविवेक एव बन्धः ॥१६॥**

व्यक्तम् ॥१६॥

मुक्तेः कार्यत्वात्तन्नाशे पुनर्बन्ध इत्यत्राह—

**न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥१७॥**

श्रुतिश्च "आत्मा ज्ञातव्यः प्रकृतितो विवेक्तव्यः"[4] "न

---

१. कूटस्थपरिणामिनित्यः (पाठा०)।

२. स्यादात्मवदुच्छित्तेरिति नागेशः।

३. प्रकारान्तराभावात् (पाठा०)।

४. न प्रचलितासु श्रुतिषु वाक्यमिदं दृश्यते; तुल० बृहदा० २।४।५ प्रकरणम्। सांख्यतत्त्वकौमुद्यामपीदमुद्धृतम् (२ का०)।

पुनरावर्त्तते" ( छान्दोग्य० ८।१५।१ ) इति। न्यायश्च भावकार्यस्यैव नाशः, दुःखनिवृत्तिस्त्वभावरूपेपि ॥१७॥

विपक्षे दोषमाह—

अपुरुषार्थत्वमन्यथा ॥१८॥

अन्यथा मुक्तस्यापि बद्धत्वम। अतएवापुरुषार्थत्वम् ॥१८॥

दूषणान्तरमाह—

अविशेषापत्तिरुभयोः ॥१९॥

उभयोः संसारि-मुक्तयोर्बन्धयोगाविशेषात् ॥१९॥

व्याध्यादयो योगान्तरायाः। तथाच पतञ्जलिः—'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" ( योगसूत्र १।३० ) व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, संशय उभयकोटिस्पृग् ज्ञानम्, प्रमादः समाधावनवधानम्, आलस्यं कायगुरुत्वम्, अविरतिः विषयतृष्णा, भ्रान्तिदर्शनं मिथ्याज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं लब्धभूमेर्मनसि भ्रंशित्वम्। मुक्तौ किमेषां ध्वंसमात्रं धर्मान्तरप्राप्तिर्वेत्यत्राह—

मुक्तिरन्तरायध्वं[1]स्तेर्नपरः ॥२०॥

धर्मान्तरपक्षे कूटस्थत्वप्रच्यवः ॥२०॥

अभ्युपगम्याह—

तत्राप्यविरोधः ॥२१॥

भवतु धर्मयोगः, तथापि न काचित् क्षतिः। मुक्तावनावृत्तिरुक्ता, सा धर्मान्तरयोगेऽप्यस्तीति ॥२१॥

---

१. ध्वंसो न परः, ध्वस्तेर्न परः ( पाठा० )।

श्रवण-मनन-निदिध्यासनं किं सर्वपुरुषसाधारणं न वे-त्यत्राह--

अधिकारित्रैविध्यान्न नियमः ॥२२॥

त्रिविधास्त्वधिकारिणो मृदुमध्याधिमात्राः। अधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यमस्य द्वाभ्याम्, मन्दस्य त्रिभिः। न सर्वं सर्वस्य ॥२२॥

पक्षान्तरमाह--

दार्ढ्यार्थमुत्तरेषाम् ॥२३॥

उत्तरेषां मन्दानां दार्ढ्यार्थं साधनत्रयमुक्तम्। श्रुतिरपि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (बृहदा० २।४।५; ४.५।६ इति) ॥२३॥

स्वस्तिकादीनां मध्ये किमासनमनुष्ठेयमित्यत्राह--

स्थिरसुखमासनमिति न नियमः ॥२४॥

स्वस्तिकादिनियमो नास्ति। इतिशब्दो हेत्वर्थः। ततश्च[1] स्थैर्यार्थं सुखार्थं वा आसनानुष्ठानम्, तदेवास्तु व्यापकत्वा-दिति ॥२४॥

एकाग्रतया विषयचिन्तनं ध्यानम्, निर्विषयं वा मनो ध्यानमित्यत्राह--

---

१. स्वस्तिक.....ततश्चेति वाक्यमिदं गार्बेसंस्करणे न पठ्यते।

ध्यानं निर्विषयं मनः ॥२५॥

निर्विषयं गलितवृत्तिकम्। [1]समाधावत्र ध्यानशब्द इति ॥२५॥

वृत्तिनिरोधतुल्यत्वे सुषुप्तिसमाध्योः को विशेष इत्यत्राह—

उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधा[2]द्विशेषः ॥२६॥

उपरागो विषयवासना, तन्निरोधः समाधाविति विशेषः ॥२६॥

निःसङ्गत्वादात्मन उपरागाभावात् सर्वदा मुक्तिरित्यत्राह—

निःसङ्गेऽप्युपरागोऽविवेकात् ॥२७॥

प्रकृतिपुरुषाविवेकात् प्रकृत्युपरागेणात्मन उपराग इत्यभिमानः ॥२७॥

उपरागोऽपि न तात्त्विक इत्यत्राह—

जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥२८॥

तयोः संसर्गादुपरागो युक्तः। आत्मनस्त्वसंसर्गान्नोपरागः, किन्त्वभिमानः, आत्मन्यहङ्काराध्यास[3] इत्यर्थः ॥२८॥

कथमभिमाननाश इत्यत्राह—

ध्यानधारणाभ्यासवैराग्यादिभि स्तन्निरोधः ॥२९॥

निरोधः निवृत्तिः। आदिशब्दात् समाधिग्रहणम् ॥२९॥

एकदेशिमतमुक्त्वा स्वमतमाह—

---

१. इत आरभ्य एव वृत्तिपाठः क्वचित् पठ्यते। अस्मत्संमत-पाठस्तु साधुतरः पूर्णार्थकरणात्।

२. विरोधाद् विशेषः (पाठा०)।

३. आत्मन्यहंकाराध्यासादुपरागाध्यासः ( पाठा० )।

लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥३०॥

लयः सुषुप्तिः[1], विक्षेपो जागरितम् । तयोर्व्यावृत्त्या अहंकारादेर्नाशः ॥३०॥

गुहादिस्थानेषु केषु ध्यानादयः कर्त्तव्या इत्यत्राह—

न स्थाननियमश्चित्तप्रसादा[2]भावात् ॥३१॥

यत्त चित्रप्रभावो न भवति, तत्र न कर्त्तव्यमनुष्ठानम् ॥३१॥

अहङ्कारादीना मुपादानत्वमस्तु कुतं प्रकृत्येत्यत्राह—

प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥३२॥

अन्येषामहङ्कारादीनां कायत्वश्रुतेः तेषामपि कारणं प्रकृतिरित्यसकृदावेदितम् ॥७२॥

प्रकृतिपुरुषयोः पूर्वकालभवित्वाविशेषात् कः कारणमित्यत्राह—

नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥३३॥

गुणत्रत्वसंसर्गित्वे कारणयोग्यता । सा चात्मनि नास्तीति प्रकृतिः कारणम् ॥३३॥

आत्मनश्चेतृत्वाद् भोक्तृत्वादि युज्यते, न जडस्य प्रधानस्येत्यत्राह—

श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥३४॥

व्यक्तम् ॥३४॥

---

१. स्वप्नसुषुप्तिः ( पाठा० ) ।

२. चित्त प्रासादात् ( पाठा० ) ।

तन्मात्राणां महाभूतकार्यत्वदर्शनात् कथं प्रकृतेः कारणत्व-मित्यत्राह--

पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥३५॥

यथा घटादेर्मृत्पिण्डकार्यत्वेऽपि पारम्पर्येण परमाणूपादानत्वं तथात्रापीति ॥३५॥

प्रकृतिर्व्यापिका न वेत्यत्राह--

सर्वत्र कार्यदर्शनाद् विभुत्वम् ॥३६॥

स्पष्टम् ॥३६॥

विपक्षे दोषमाह—

गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥३७॥

गतिः क्रिया, तद्योगो यस्यास्ति तदव्यापकम्। प्रकृतेर्गतिमत्वे कार्यत्वं परमाणुवत्, न त्वाद्यकारणता ॥३७॥

प्रकृतेरुपादानत्वे द्रव्यस्योपादानत्वात्तदन्तर्भावः स्यादित्यत्राह--

प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥३८॥

प्रसिद्धेभ्यो द्रव्येभ्योऽधिकं प्रधानम्, अनियतत्वात् पदार्थस्य। उपादानकारणता च न समवायिकारणता, किन्तु प्रधानता[1], वैशेषिकसमवायस्यानभ्युपगमात् ॥३८॥

प्रकृतिः किं गुणात्मिका, गुणधर्म्मिणी वेत्यत्राह—

सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥३९॥

तादात्म्यात्[2] ॥३९॥

---

१. तद्रूपता (पाठा०)। २. क्वचित् स्पष्टमित्येव वृत्तिपाठः।

उपभोगार्थं प्रवृत्तिर्दृष्टा, न तु जडस्योपभोग इत्यत्राह—

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्र-कुङ्कुमवहनवत् ॥४०॥**

कृतव्याख्यानमेतत्तृतीये ऽध्याये प्रधानेत्यादिसूत्र (३।५८) ॥४०॥

प्रकृते रेकत्वात् कथं सृष्टिवैचित्र्यमित्यत्राह—

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥४१॥**

उपादानाऽभेदेऽपि निमित्तभेदेन भेदः। यथा सुवर्णा-भेदेऽपि कर्मभेदेन मुकुटग्रैवेयकादि-भेदः ॥४१॥

कथं सृष्टिप्रलयावित्यत्राह—

**साम्यवैषम्याभ्यां कार्यद्वयम् ॥४२॥**

साम्यात् प्रकृतेः सदृशपरिणामात् प्रलयः। वैषम्यात् प्रकृते-र्महदादिभावेन विसदृशपरिणामात् सृष्टिः ॥४२॥

प्रलयमाह[1]—

**विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥४३॥**

यथा लोको बन्धमोक्षार्थं यतते, मुक्तबन्धश्च कृतार्थत्वादु-दास्ते, तथा प्रधानमपि ॥४३॥

व्यापकत्वात् प्रकृतिपुरुषयोः सम्बन्धोऽस्त्येवेति मोक्षेऽपि भोगप्रसङ्ग इत्यत्राह—

---

१. सृष्टिप्रलयमाह ( पाठा० )।

नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥४४॥

भवेदेवं यद्यन्यस्य प्रधानस्य उपसर्पणमात्रमुपभोगनिमित्तं स्यात्। न चैवम्, किन्तूपभोग्यनिमित्त उपभोगः। स च मोक्षे नास्तीति ॥४४॥

एक एवात्मा, तथाच "एकमेव परं ब्रह्म सत्यमन्यद्विकल्पितम्[2]।" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः (ईशोपनिषत् ७)।"

पुरुषबहुत्वं व्यवस्थातः ॥४५॥

एतत् प्रथमाध्याये जन्मादिसूत्रे वर्णितम् (१।१४९)। तथाच "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः (श्वेताश्व० ४।५) ॥४५॥

उपाधिभेदान्नानात्वं भविस्यतीत्यत्राह—

उपाधिश्चेत्तत्सिद्धौ[3] पुनर्द्वैतम् ॥४६॥

तत्सिद्धौ भेदसिद्धौ। उपाधिमिथ्यात्वे कुतो भेदसिद्धिः? सत्यत्वे तु तेनैव पुनर्द्वैतम् ॥४६॥

दूषणान्तरमाह—

द्वाभ्यामपि प्रमाणविरोधः ॥४७॥

सत्यासत्याभ्याम्। सत्यत्वेऽद्वैतसिद्धान्तहानिः। असत्यत्वे कुतो नानात्वव्यवस्था ॥४७॥

नाद्वैतश्रुतिविरोधो द्वैतहानिश्चेत्यत्राह—

---

१. विमुक्तोपभोगो (पाठा०)।

२. इदं कस्याश्चिदुपनिषदः पुराणस्य वा वचनमिति प्रतिभाति; प्रबोधचन्द्रोदयः ५।१५ अपि द्र०

३. उपाधिसिद्धिश्चेदिति नागेशः।

**द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरञ्च साधकाभावात् ॥४८॥**

अद्वैतश्रुतेः सामान्यपरत्वात् प्रशंसापरत्वाद्वा अन्यार्थत्वेन न विरोधः। उपाधिसत्यत्वे च न द्वैतहानिरिति नास्ति विरोधः। तस्मान्न पूर्वमात्मैकत्वं नोत्तरञ्च श्रुतिविरोधः। अद्वैतत्वे प्रमाणासत्वान्न तत्सिद्धिरिति भिन्नोऽस्तीत्यर्थः ॥४८॥

न प्रमाणाभावः, स्वप्रकाशमेव प्रमाणमस्तीत्यत्राह—

**प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः[1] ॥४९॥**

व्यक्तम्[2] ॥४९॥

दूषणान्तरमाह—

**जडव्यावृत्तो[3] जडं प्रकाशयति चिद्रूपः ॥५०॥**

जडादन्यः चिद्रूपो जडं प्रकाशयतीति जडव्यावृत्तत्वेन प्रकाशरूपत्वम्, न तु प्रकाशधर्मत्वमुक्तम्। अतएव "स एष नेति' (बृहदा० ३।९।२६) इत्युच्यते निषेधमुखेन, न तु विधिमुखतयेति। अथाऽलौकिकप्रकाशरूपत्वम्, तत्र व्याप्तिग्रहणाभावाद् दृष्टान्ताभावः। अथ योगिगम्यं तत्; असम्प्रज्ञातयोगिनो ज्ञानचेष्टाभावाल्लिङ्गं नास्ति; तेन च लौकिक एवार्थोऽनुमीयते। न च सोऽप्यनुभवरूपं चैतन्यं प्रतिपादयितुं शक्नोति। तथाच "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। तथापि न तदाख्यातुं सरस्वत्यापि शक्यते (काव्यादर्श

---

१. कर्मकर्तृत्वविरोधः (पाठा०)।

२. क्वचित् कोशेऽत्र वृत्तौ भाष्यपाठः संयोजितो दृश्यते।

३. जडव्यावृत्तौ इति गार्बेपाठः, न चायं साधुः।

१।१०२ ) ॥" एवमचेतनव्यावृत्तत्वाच्चेतन इत्युच्यते, न तु चितिसमवाय श्चैतन्यरूपत्वं वा, असम्प्रज्ञातावस्थायां निरुद्ध-वृत्तित्वेनाऽप्यलौकिकचैतन्यमिति व्यवहारादन्यथा सिद्धेः। सम्प्रज्ञातावस्थायान्तु वृत्तिज्ञानेनैव चैतन्यमिति व्यपदेशः। एवं दुःखनिवृत्तावानन्दरूपत्वमिति प्रयोगः। यदि भावात्म-कमानन्दरूपत्वम्, तत् किं सुखमात्रे प्रयोगः ? तथा सत्यज्ञातस्य सुखस्यादर्शनात् सुख तज्ज्ञानं ज्ञाता चेति कुतोऽद्वैतम्। अथ सुखविशेषे आनन्दव्यपदेशः, सुखञ्च चैतन्यरूपञ्चेति न दृष्टम्। अविवेचकानामेवैतत्। विवेचकास्त्वेवं मन्यन्ते—दृष्टेनैव व्यावृत्तिरूपत्वेनैवोपपत्तौ अदृष्टालौकिककल्पना गुर्वीति। यदि चैतन्यं न स्यात्, वस्तुसंवेदनमेव न स्यात्। मैवम्, यथा अलावुवेणुतन्तूनां तथाविधसंयोगविशेषः शब्दकारणम्, न तु त्रयाणां संयोगादतिरिक्तं किञ्चिदस्ति, तथा पाञ्चभौतिकत्वा-विशेषेऽपि जन्तुरूपेण परिणतानां पिण्डानां तथाविधसम्बन्धा च्चैतन्यमिति। प्रकाशत्वे चात्मनोऽप्यंशे जडत्वमिति ॥५०॥

एवञ्च स्वप्रकाशश्रुतिर्बाधिता स्यादित्यत्राह--

**न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥५१॥**

जडस्य त्रिगुणात्मकत्वेन रागहेतुत्वात् प्रमाणादयश्च त्रिगुणात्मकत्वेन हेया इति, रागोच्छित्तिश्च कर्त्तव्येति। तत्सिद्धेः स्वप्रकाशश्रुते रन्यथासिद्धेः ॥५१॥

जगतो मिथ्यात्वात् कथमन्यथा सिद्धिरित्यत्राह—

**जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात् ॥५२॥**

दुष्टकारणजन्यम् यथा पीतशङ्खज्ञानम्। बाधकञ्च नेदं रजतम्, इति ज्ञानम्। न चेदं तथा, प्रकृत्यादीनामदुष्टत्वात्। 'नेदंजग

दि’ति प्रत्ययाभावाद् बाधकञ्च नास्ति। संक्षेपाज्जगदुच्यते—ऊर्ध्वं भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति। अधो महातल-रसातल-तलातल-पाताल-सुतल-वितलातला इति। मध्ये जम्बूद्वीपः। तन्मध्ये सुमेरुः, तत्पूर्वादि-चतुर्दिक्षु मन्दर-गन्धमादन-विपुल सुपार्श्वनामानो विष्कम्भ[1]पर्वताः। मेरुदक्षिणे भारतवर्ष-हिमालय पर्वत-किम्पुरुषवर्ष-हेमकूटपर्वत-हरिवर्षनिषधपर्वताः। मेरोरुत्तरे कुरुवर्ष-शृंङ्गिपर्वतहिरण्मयवर्ष[2]-श्वेतपर्वत-रम्यकवर्ष-नीलपर्वताः। मेरोः पूर्वं भद्राश्ववर्षो माल्यवत्पर्वतः। मेरोः पश्चिमे केतुमालवर्षो गन्धमादनपर्वतः। मेरोरधः इलावृतवर्षः। लक्षयोजनो जम्बूदीपः, तद्वेष्टनेन तत्तुल्यो लवणसमुद्रः। तद्वेष्टनेन तद्द्विगुणः कुशद्वीपः, तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः। तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः, तद्वेष्टनेन तत्तुल्यो दधिसमुद्रः। तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः, तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः। लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगदिति ॥५२॥

पूर्वोक्तमपि शिष्यहिताय पुनः प्रतिपादयति।

**प्रकारान्तरासम्भवात् सदुत्पत्तिः[3] ॥५३॥**

प्रकारान्तरञ्च पूर्वमेव (१।११४–११८) दूषितम् ॥५३॥

अहं करोमीति प्रत्यक्षात् किमहङ्कारः कर्त्ता ? अथाऽहङ्कार शब्देनात्मोच्यते, स एव कर्त्तेति ? अत्राह—

**अहंकारः कर्ता न पुरुषः ॥५४॥**

पुरुषस्यापरिणामित्वात्। कृतिचैतन्ययोः सामानाधिकरण्यञ्च वृक्षतिष्ठतीत्यादौ व्यभिचरति ॥५४॥

---

१. पुराणीये भुवनकोशे विष्कम्भपाठदर्शनात् विष्टम्भेति सर्वसंपादकसंमतः पाठश्चिन्त्यः।

२. हिरण्यकेति पाठो भ्रष्टः। ३. तदुत्पत्तिः ( पाठा० )।

एककर्मक्षयेऽपि यावद्देहभावित्वात् कर्मणोऽपरापर-कर्मोत्पत्त्या चानिर्मोक्ष इत्यत्राह—

**चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥५५॥**

अविवेकात् कर्मार्जनं तेन च भुक्तिरिति। चिदवसाना आत्मज्ञानावसाना। विवेकोत्पत्तौ क्वाऽपरकर्मार्जनम्? तद-भावात् क्वोपभोगः? कृतकर्मणो ज्ञानादेव नाशः, तथा च—'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन। ज्ञानाग्निः सर्व-कर्माणि भस्मसात् कुरुते तथा।" (गीता४।३७) इति ॥५५॥

[1]अतिशयवशाच्चन्द्रादिलोकप्राप्तिरेव पुरुषार्थो भविष्य-तीत्यत्राह—

**चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसम्भवात्[2] ॥५६॥**

आदि-शब्दाद् ब्रह्मलोकादयो ग्राह्याः। निमित्तमविवेक-कर्मा-दीति ॥५६॥

गुरूपसम्पन्नस्य शब्दश्रवणादेव मोक्षो भविष्यतीति किं मन-नादिनेत्यत्राह—

**लोकस्य नोपदेशात्सिद्धिः पूर्ववत् ॥५७॥**

पूर्वमेवोक्तं मन्दानां न श्रवणमात्रान्मुक्तिः, किन्तु मनना-दिना। अनेन यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधय उपलक्षणीयाः ॥५७॥

कथं तर्हि उपदेशमात्रान्मुक्तिः श्रूयत इत्यत्राह—

**पारम्पर्येण तत्सिद्धौ विमुक्ति[3]श्रुतिः ॥५८॥**

प्रथमभावित्वात् श्रवणस्य पारम्पर्येण कारणत्वसिद्धौ विमुक्तिश्रुतिः ॥५८॥

---

१. सातिशयत्वात् (पाठा०)। २. निमित्तसद्भावादिति भिक्षुः।
३. विमुक्तश्रुतिः (पाठा०)।

यथा च व्यापकत्वात् प्रकृतेर्जगत्कारणत्वम्, एवं व्यापकत्वादात्मनः सर्वदेशे भोगप्रसङ्ग इत्यत्राह—

**गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकालादिलाभो[1] व्योमवत् ॥५९॥**

यथा घटाद्युपाधियोगाद् घटे गच्छति घटाकाशं गच्छतीति ज्ञानम्, तथा देहावच्छेदेन तद्गत्यात्मगतिरिति। कर्मवशाद् यत्र देशे उपभोगस्तत्र देहगमनादात्मनो भोगलाभः। यद्यात्मा व्यापकश्चिद्रूपः, सर्वदा सर्वत्र सर्वार्थेषु समकालं ज्ञानं प्रसज्येत, न चैवं दृश्यते। तन्न। भवेदेवं यद्यात्मा व्यापकस्वरूपेण वृत्तिज्ञानं जनयति। न चैवम्। किन्तु देहादिपरिच्छिन्न एव। यथा सूर्यः प्रकाशस्वभावोऽपि मेरोर्दक्षिणस्थो नोत्तरभागं प्रकाशयति, उत्तरस्थो न दक्षिणभागम्, अव्यापकत्वात्। यदा तु ज्ञानादिना दग्धकर्माशयत्वेन नष्टदेहादिसंघातो नीरजस्तमस्को व्यापको भवति, न तदा वृत्तिज्ञानं जनयति, अविकारित्वात्, किन्तु स्वयमेव जगत्प्रकाशस्वभावः। यथा चाकाशं व्यापकं प्रादेशिकधूमादिसम्बन्धेन न मलिनं भवति, किन्तु घटाद्यवच्छिन्नं सद् घटाद्युदरवर्त्ति सर्वं मलिनमित्यनुमन्यते। तत्रापि नाकाशं मलिनं तस्य लेपाभावात्, किन्तु अविवेकानां मिथ्याभिमानमात्रम्, घटभङ्गे तथा दर्शनात्। तथात्मा व्यापकः, नास्य धर्मादिसम्बन्धो नाऽपि ज्ञानं किन्तु शरीरावच्छेदेन। मरुद्व्योहियोगवत् जीवसम्बन्धेन मनोयोगाज्जीवात्मेत्युच्यते। मनसाऽविनाभूना प्रकृतिरिति प्राकृतधर्माधर्मज्ञानाज्ञानसुखदुःखाद्यहङ्कारेन्द्रियतद्विषयजन्मादिमानिव लक्ष्यते। सात्त्विकांशेन प्रकृतेः स्वच्छत्वात् तत्प्रतिबिम्बित आत्मा प्रकृतिकर्त्तृत्वादि-

---

१. लाभे ( पाठा० )।

कमात्मन्यभिमन्यते। मिथ्याभिमानोऽपि प्रकृतिप्रतिबिम्बिते आत्मनि, न त्वात्मनि। यथा निष्कम्पोऽपि चन्द्रो जलप्रतिबिम्बितो जलकम्पात् कम्पत इति मिथ्याप्रत्ययः, यथा वा मुखं निर्मलमपि मलिनदर्पणे प्रतिबिम्बितं मलिनमित्यभिमन्यते। विवेचकास्तु कैवल्यदर्शिन आत्मनोऽपरिणामित्वादसङ्गत्वाच्च कर्तृत्वादिकं मिथ्येति पश्यन्ति। यदा तु ध्यानपारिपाकवशाद् वासनाह्रासक्रमेण मनोलयाद्वासनानाशाद् देहभङ्गेऽप्यन्यदेहानुत्पादस्तदा जीवात्मनोऽपि परमात्मना सहैकत्वेन व्यापकत्वात् क्व धर्माधर्मयोगः कर्तृत्वादिकं वा। किन्तु, अवाग्गोचरत्वेऽप्यस्याऽपरोक्षबोधानन्दरूपत्वमिति भण्यते, अन्यथा प्रतिपादयितुमशक्यत्वादिति ॥५९॥

देहोत्पत्तेः पूर्वं निराश्रयत्वादधिष्ठानासम्भवादुत्पत्त्यनन्तरमात्माधिष्ठानमित्यत्राह—

**अनधिष्ठितस्य पूतिभावयोगान्न[1] तत्सिद्धिः ॥६०॥**

व्यापकस्य नित्यस्य पूर्वपश्चाद्भावायोगात् देहोत्पत्तिसमकालमेवाधिष्ठानाद् न तत्सिद्धि र्नानधिष्ठानसिद्धिः। ततश्च न पूतिभाव इति ॥६०॥

अदृष्टवशादेव पूतिभावो न भविष्यतीत्यत्राह—

**अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥६१॥**

निराश्रयस्यादृष्टस्य असामर्थ्याद् देहासम्बद्धत्वेन न कार्यकरणम्। यथा जलस्यासम्बद्धस्य[2] नाङ्कुरजनकत्वम्। आदिशब्दादग्नेर्ग्रहणाम् ॥६१॥

किमाश्रया धर्मादयः कार्यजनका इत्यत्राह—

---

१. पूतिभावप्रसंगात् पाठा०)।

२. असंबद्धस्येति न क्वचित्।

निर्गुणत्वात्तदसम्भवादहङ्कारधर्मा ह्येते ॥६२॥

निर्गुणत्वादात्मनस्तद्धर्मासम्भवादेते धर्मादयोऽहङ्कारधर्माः। कार्यकारणयोरभेदाद् बुद्धिधर्मा एवाऽहंङ्कारधर्मा इत्युक्तम् ॥६२॥

किमात्मनः स्वरूपेण जीवत्वमन्यथा वा ? इत्यत्राह—

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥६३॥

स्वरूपेण जीवत्वे कर्त्वात् भोक्तृत्वात् कौटस्थ्यहानिः। अन्वयव्यतिरेकाच्च। देहावच्छेदेन वायुवह्निसंयोगादिवेन्द्रिय-संयोगेन विशिष्टस्यैव जीवत्वम् ॥६३॥

ऐश्वर्यशालित्वाज् जीवात्मैवेश्वरः, स एव जगन्निर्मा-स्यति। तथा च "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।" ( गीता १८.६१ ) इत्यत्राह—

अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥६४॥

प्रमाणाभावादिति जगदुपादानज्ञानाभावादित्यर्थः। अव्यापकत्वादनेकेश्वरकल्पनापि स्यात् ॥६४॥

कार्यत्वाच्चेतनकार्यत्वमप्यनैकान्तिकमित्यत्राह—

अदृष्टोद्भूतिवत्[1] समानत्वम् ॥६५॥

अदृष्टोद्भूतिवत् कर्तृत्वात्, तस्यापि सकर्तृकत्वे ऽदृष्टोद्भूत्य-न्तरस्य सहकारित्वम्, तस्यास्तस्या अप्यन्यस्या इत्यनवस्था। सादित्वाच्च संसारस्य नानादितापरिहारः ॥६५॥

अहङ्कारस्य कारणत्वे किं महान्तं प्रत्यपि कारणत्वमित्यत्राह—

---

१. अदृष्टोद्भूतवत् ( पाठा० )।

महतोऽन्यत् ॥६६॥

न स्वस्य कारणं कार्यं भवति ॥६४॥

स्वीया प्रकृतिः, स्वामी पुरुषः। तयोः सम्बन्धः किं स्वाभाविकः? अन्यनिमित्तको वा? स्वाभाविकत्वे स्वभावस्याऽनपायादनिर्मोक्ष इत्यत्राह—

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥६७॥

प्रकृतिरित्युपलक्षणम्, पुरुषस्येत्यपि द्रष्टव्यम्। कर्मणश्च स्वस्वामिसम्बन्धकारणत्वे विवेकात् कर्मक्षये स्वस्वामिसम्बन्धाभावान्मुक्तिः। अनित्यस्य सादित्वान्नानादितापरिहारः, नित्यस्य पुनरस्तीत्यनादिरित्युक्तम् ॥६७॥

मतान्तरमाह—

अविवेकनिमित्तको[1] वा पञ्चशिखः ॥६८॥

स्वस्वामिभाव इत्यनुवर्त्तते ॥६८॥

एकदेशिमतमाह—

लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥६९॥

लयनात् लिङ्गमिति सूक्ष्मसातिवाहिकं शरीरम्। यावत् स्थूलशरीरे सूक्ष्मशरीरस्य गमनमस्ति तावत् स्वस्वामिसम्बन्धाद् बन्ध इत्युच्यते ॥६९॥

स्वमतमाह—

---

१. अविवेकनिमित्तः ( पाठा० )।

**यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥७०॥**

यद्वा तद्वेति कर्मक्षयाद्वा, ज्ञानाद्वा, अन्यतो वा, इति स्वस्वामिसम्बन्धोच्छित्त्या संसारोच्छित्तिः पुरुषार्थः। तदुच्छित्तिः पुरुषार्थ इति वीप्साऽध्यायसमाप्तौ ॥७०॥

एष सत्कार्यसिद्धान्तः पूर्वमेव निरूपितः।
तन्त्रतः प्रतिपाद्यत्वान्न हि स्यात् पुनरुक्तता ॥
[१]वृत्तिः कृताऽनिरुद्धेन सांख्यसूत्रस्य धीमता।
मूढसत्त्वविवेकाय ह्यात्मनश्च विमुक्तये ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
तन्त्रार्थसंक्षेपाध्यायः षष्ठः।

---

१. वृत्तिकर्त्ताऽनिरुद्धोऽभूत् सांख्यशास्त्रस्य कृत्स्नतः ( पाठा० ); अत्र क्वचित् सांख्यसूत्रस्येति पठ्यते।

वेदभाष्यकार सायणाचार्यविरचित

# माधवीय धातुवृत्ति

सम्पादक : स्वामी द्वारिकादास शास्त्री, नव्यव्याकरणाचार्य

प्रस्तावना लेखक : सर्वतन्त्रस्वतन्त्र पं० श्री रघुनाथ शर्मा, वेदान्तविभागाध्यक्ष, वा० संस्कृत विश्वविद्यालय, वाराणसी।

सायणाचार्यविरचित इस धातुवृत्ति में प्रत्येक धातु के साधारण, णिजन्त, सनन्त, यङन्त, यङ्लुगन्त, भावकर्म, कर्मकर्तृ, तथा कृदन्त रूप संक्षेप से प्रदर्शित किये गये हैं। इतना ही नहीं, जिन रूपों के विषय में विद्वानों में मतभेद हैं, उनके विषय में प्राचीन आचार्यों के विविध मतों को उद्धृत करके निर्णयात्मक रूप में आचार्य ने अपना मत भी लिखा है।

यद्यपि अतिसूक्ष्म विचार की चर्चा होने से कई स्थानों पर यह ग्रन्थ दुरूह हो गया है तथापि विद्वान् अध्यापकों तथा बुद्धिमान् अनुसन्धित्सु छात्रों के लिये यह परम सहायक है।

सिद्धान्तकौमुदी के प्रचलन से पूर्व पाणिनीय वैयाकरणों में धातुपाठ की क्या शैली थी—इसका वास्तविक दिग्दर्शन इसी ग्रन्थ में होता है।

जो लोग पाणिनीय क्रम का उल्लङ्घन न करते हुए आर्षक्रम से ही पाणिनीय तन्त्र का अध्ययन-अध्यापन करना चाहते हैं, उनके लिये यह ग्रन्थ काशिकावृत्ति के समान ही परम सहायक है।

मूलग्रन्थ का एक बार पुनः प्राचीन संस्करणों तथा महाभाष्य, काशिका, पदमञ्जरी, न्यास आदि आकर-ग्रन्थों के सहारे संशोधन कर दिया गया है।

विद्वान् सम्पादक ने भूमिका में धातुपाठ से सम्बद्ध सभी विषयों पर समीक्षात्मक विचार किया है।

अन्त में संलग्न परिशिष्ट में धातुसूची, सम्बद्ध ग्रन्थसूची, ग्रन्थकार-सूची, गणपाठ आदि भी दे दिये गये हैं।

मूल्य २०) मात्र